श्रीमधुसूदनग्रन्थमालायां प्रथमस्तवके तृतीयं प्रसूनम्—

जयपुर-राजकीय-पण्डितसभाप्रमुख-महामहोपदेशक-मधुसूदन-
विद्यावाचस्पतिना प्रणीते वैदिकविज्ञानप्रकाशके
ब्रह्मविज्ञानशास्त्रे द्वादशवादात्मके
एकादशवादग्रन्थोऽयं

# संशयतदुच्छेदवादः

यत्र प्रदर्श्या विषयाः पुरातना यत्र प्रकारोऽभिनवः प्रदर्शने ।
यत्र प्रमाणं श्रुतयः सयुक्तयस्तद् ब्रह्मविज्ञानमिदं विमृश्यताम् ॥

वैदिकमहामहर्षिविज्ञानपर्षत्प्रतिपादितातिगहनविज्ञानाटवीमार्ग-
प्रवेशहेतुभूतेश्वराज्ञापत्ररूपाः, ब्रह्मविज्ञानशास्त्र-
संबन्धिनो द्वादश ग्रन्थाः—

१-विज्ञानेतिवृत्तवादः, २-सदसद्वादः, ३-रजोवादः, ४-व्योमवादः,
५-अपरवादः, ६-आवरणवादः ७-अम्भोवादः ८-अमृतमृत्युवादः,
९-अहोरात्रवादः १०-दैववादः, ११-संशयोच्छेदवादः
१२-सिद्धान्तवादः ।

तेष्वयमेकादशकः संशयतदुच्छेदवादग्रन्थः श्रीमदाद्यादत्तठक्कुरेण सम्पाद्य
पं० रामशङ्करवाजपेयीप्रबन्धेन, लक्ष्मणपुरे स्टीमप्रिंटिंग-
मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितः ।

प्रथमावृत्तिः ] सन् १९२७ ई० [ १०००

श्री मधुसूदनग्रन्थमाला—तृतीयं प्रसूनम् ।

# सम्पादकस्य वक्तव्यम् ।

वेद एव तावदत्रभवतामार्याणां परमो निधिरित्यत्र विसंवादविरहेऽपि साम्प्रतं तस्य पठनपाठनप्रचारस्त्वतीवविरलप्रायः । गीर्वाणवाणीसमुद्धारबद्धपरिकरैः पण्डितप्रकाण्डैर्यथा न्यायव्याकरणसाहित्यादिषु श्रमः क्रियते न तथा सकलशास्त्रमौलिमालायमानेषु सर्वविधविज्ञानानामेकायतनभूतेषु वेदेषु । तत एव च वैदिकविद्याप्रतिपादकानां निबन्धानामिदानीन्तने काले सर्वथा ह्यभाव एव । केचिद्वैदेशिकपण्डिता अवश्यमेव वैदिकविज्ञानमाहात्म्याकृष्टमनसस्तदुद्धारपरायणाः परिदृश्यन्ते च; परन्तु महता श्रमेणापि न पारयन्ति ते वैदिकविज्ञानरहस्यं सम्यगुद्घाटयितुं, तेषां सर्वथा भारतीयरीतिनीतिसभ्यतादिभिः पूर्णतया परिचितेरभावात् । तथापि वैदिकसाहित्यपुस्तकमुद्रणेन तद्विषयकान् ग्रन्थाँश्च विरच्यास्माकमुत्साहवर्धनेन च महदुपकृतं तैरप्यैतदुन्मुक्तकण्ठमुद्घोषयितुं शक्यते । परन्तु यदि नाम भारतभूमिष्ठैर्भूसुरैः परम्परागतपरिपाटीपरिशीलनपण्डितैरेवैतस्यां दिशि क्रियेत दृष्टिनिक्षेपस्तदैव भवेत् सुशको वैदिकशास्त्रपठनपाठनप्रचारः । इदानीं तु भगवदनुग्रहेण जयपुरराजसभाप्रधानपण्डितैरमरगुरुमपि प्रज्ञयोपहसद्भिः श्रीमद्भिर्वाग्देवतावतारभूतैर्विद्यावाचस्पति श्रीमधुसूदनशर्म्म महानुभावैर्वैदिकविज्ञानान्वेषणार्थमाविष्कृतो नवीनः पन्था इति महद्भागधेयमस्माकम् । महामहनीयचरिता एते महानुभावा न केवलं भारतभूवलये पाश्चात्यदेशेष्वपि परमां प्रसिद्धिमुपगताः । स्वर्गतजयपुराधीशैः सह आङ्गलदेशं गत्वा तत्रत्यविश्वविद्यालयेषु सकलविद्वज्जनसमक्षं वैदिकविज्ञानमाहात्म्यप्रतिपादनेन तथा प्रदर्शितं स्वकीयं वेदविषयकं प्रावीण्यं यथा सर्व एव तत्रत्यपण्डिता विस्मयपरवन्तो जाताः । समुद्रयात्रामधिकृत्य 'प्रत्यन्तप्रस्थानमीमांसे' ति प्रकाशितमेभिः पुस्तकमेकम् । अन्ये च पर:शता विरचिता ग्रन्था महाशयैरेतैः । तेषु केचित्तु पूर्वमेव प्रकाशिताः । कतिपये साम्प्रतं मुद्रयितुं प्रक्रान्ताः । यद्यपि सर्वपथीनप्रतिभैरेभिर्महोदयैर्निखिलतन्त्रजालप्रगल्भमतिभिर्विविधविषयावगाहिनो निबन्धा रचितास्तथापि वैदिकविषयेषु प्रायः पण्डितानामौदासीन्यमवलोक्य वैदिकविज्ञानरहस्योद्घट्टनायैव सविशेषमेषां प्रयत्नः । वेदेषु प्राधान्येन त्रयो विषयाः प्रतिपादिताः । यज्ञः, इतिहासः, विज्ञानञ्चेति, । तत्र यज्ञानां सरहस्यं कार्त्स्न्येन निरूपणाय ग्रन्थकृद्भिरेतैः 'यज्ञ मधुसूदनो'नामग्रन्थः पृथङ्निबद्धः, इतिहासस्यामूलचूडं निरूपणाय च देवासुरख्यात्यादयः पञ्चख्यातय उपनिबद्धाः । अथ विज्ञानरहस्यप्रकाशनाय तु ब्रह्मविज्ञाननामा महाग्रन्थोऽयं पद्यमयो विरचितः ।

यथा ह्यधुनातनेषु दर्शनेष्वात्मादि सम्बन्धे षोढा प्रवादाः श्रूयन्ते, तत एव च षड्दर्शनानि प्रसिद्ध्यन्ति, एषां च दर्शनानां समन्वयेन मुख्यः सर्वदर्शनसिद्धान्तो

विचारशीलैरधिगन्तुं सुशकः तथैव पुरा वैदिके युगे दश प्रवादाः पृथक्प्रस्थानाः प्रचलिता आसन्निति पृथग्विग्रतन्निरूपणदर्शनेनानुमीयते । त एव दश प्रवादाः पृथगवबुध्यमानाः पूर्वपक्षभूताः, एषां समन्वयेन तु मुख्यो वैदिकः सिद्धान्तस्तल-प्रवेशिप्रतिभैरासाद्यते । ते चेमे दशवादा ऋक्संहितायां नासदीये सूक्ते ( मण्डल १० सूक्त १२६ ) समुद्दिष्टाः । एते दश वादाः अस्मिन् 'ब्रह्मविज्ञानशास्त्र' नामके महाग्रन्थे एकैकेन प्रकरणेन विवृताः। अन्ते च समन्वयरूपः सिद्धान्तवादः प्रदर्शितः । एवं महाग्रन्थस्यास्य द्वादशप्रकरणानि—आदौ 'विज्ञानेतिवृत्तवादो' ग्रन्थस्योपोद्घातरूपः, तत्र कथमस्य विज्ञानस्यार्येषु प्रसार इति बोधयितुं देवासुरख्यातौ निरूपितस्यैतिहासस्य संक्षेपः प्रदर्शितः, वैदिकविज्ञानावबोधस्य परिभाषा ऋषि-देवासुरादिभेदनिरूपणेन सम्यग्विवृता, दशानां वादानां स्वरूपमपि च सम्यग्दर्शितम् । पञ्चप्रकरणात्मकस्यास्य खण्डस्यान्यतमो 'इन्द्रविजयाभिधो' ग्रन्थः शीघ्रमेव मालायामस्यां गुम्फयितुं प्रक्रंस्यते । भारतीयार्याणामुत्पत्तिस्थानादिविषये, वैदिककालीनभौगोलिकपरिस्थितिसम्बन्धे जम्बूद्वीपादीनां विषयविभागे विवादग्रस्तानां लङ्काद्वीपादीनां निवेशविषये च सम्यग्विवेचनं तत्रोप लप्स्यते पाठकमहाभागैः । विज्ञानेतिवृत्तवादानन्तरं दशभिः प्रकरणैर्दशवादा विवेचिताः । अन्ते च सिद्धान्तवादे करतलामलकवद्वैदिकरहस्यख्यापनं कृतम् । तत्र दशसु वादेषु अहोरात्रवादसदसद्वादाविति वादद्वयम् श्रीमधुसूदनग्रंथमालायाः प्रथमद्वितीयप्रसूनरूपेण परमरसिकपाठकमधुव्रतव्रातैरास्वादितपूर्वम् । इदानीं तृतीयसुमनोरूपेणैकादशः संशयतदुच्छेदवादः पाठक महोदयेभ्यः उपाहर्तुं परमप्रमोदमापद्यते मदीयं मनः । अस्यावलोकनेन वैदिकमहर्षीणाम् विज्ञान रहस्योद्घाटनप्रणाल्या परिचयः प्राप्तुं सुशको भविष्यति । काण्डत्रयात्मकेऽस्मिन्वादे दश पर्वाणि सन्ति । तत्र विज्ञानोपक्रमाधिकारे प्रथमे काण्डे मूलम्, कृष्णः, पूर्णः, प्रत्ययः, पुरुषो यज्ञश्चेत्यैता षडुपनिषदः प्रत्येकं प्रतिपर्व विवेचिताः । संशयाधिकारे द्वितीये काण्डे संशयमिथ्यैत्युपनिषद्द्वयी विवेचिता । तृतीये च संशयोच्छेदाधिकारे काण्डे विशिष्टोपनिषदीश्वरोपनिषच्च विवेचिते । तथाचोक्तम् ।

मूलं कृष्णः पूर्णः प्रत्ययपुरुषौ च यज्ञ इत्यादौ ।
संशयमिथ्यामध्ये विशिष्ट ईश्वर इमावन्ते ॥ १ ॥
एता दशोपनिषदः संशयतद्भङ्गवाद इत्युक्तः ।
विज्ञानोपक्रमणे संशय उच्छिद्यते तत्र ॥ २ ॥

अत्राभिनवैव विचारसरणिः, दुरूहवैदिकविज्ञानविवेचनप्रकारश्च सर्वथा हृदयङ्गम एव । महामहिमशालिनो वैदिकमहर्षयश्च यत्र विषये नेतिनेतिवादपरा आसन्, यस्य परोक्षविषयतया विवेचनमतीव दुष्करमेव यदुद्देशेन भवति चात्र

* श्लोकः *

"कियद्वदामोऽलमलं परिश्रमैः परोक्षभावस्य विचारवर्त्मनि ।
सहस्रवर्षैर्बहुदेहपातनैरसंशयं ज्ञातुमिदं न शक्यते ॥"

तस्य जटिलीभूतस्य ब्रह्मविज्ञानशास्त्रस्य सुखावबोधनप्रकारः सर्वथा श्लाध्य एव । ये नाम साभिनिवेशं परिशीलयन्त्येतद्ग्रंथमवश्यमेव वैदिकमहर्षीणाम् चमत्कारपूर्णां विचारसरणिमवलोक्य भविष्यन्ति प्रमोदनिर्भरान्तःकरणाः ।

अन्येऽपिवादा ग्रंथमालायामस्यां यथावकाशं प्रकाशयिष्यन्ते येषामवबोधेन 'नावशिष्येत बोद्धु'मिति विरमति ।

विदुषामनुचरः—

श्री आद्यादत्त ठक्कुरः



# अथ ब्रह्मविज्ञानशास्त्रे संशयतदुच्छेदवादः ॥

मूलं कृष्णः पूर्णः प्रत्यय-पुरुषौ च यज्ञ इत्यादौ ॥
संशय-मिथ्या-मध्ये, विशिष्ट ईश्वर इमावन्ते ॥ १ ॥
एता दशोपनिषदः संशयतद्भङ्गवाद इत्युक्तः ॥
विज्ञानोपक्रमणे संशय उच्छिद्यते तत्र ॥ २ ॥

## १—विज्ञानोपक्रमाधिकारः षट्पर्वा प्रथमः काण्डः—

| | | | | |
|---|---|---|---|---|
| १ | मूलोपनिषत् | = | ब्रह्मकर्म्मोपनिषत् । | ( २ ) |
| २ | कृष्णोपनिषत् | = | कृष्णत्रिसत्योपनिषत् । | ( ३ ) |
| ३ | पूर्णोपनिषत् | = | पूर्णद्विसत्योपनिषत् । | ( २ ) |
| ४ | प्रत्ययोपनिषत् | = | प्रत्ययैकसत्योपनिषत् । | ( १ ) |
| ५ | पुरुषोपनिषत् | = | प्राणैकसत्योपनिषत् । | ( १ ) |
| ६ | यज्ञोपनिषत् | = | यज्ञैकसत्योपनिषत् । | ( १ ) |

## २—संशयाधिकारो द्विपर्वा मध्यमः काण्डः—

| | | | | |
|---|---|---|---|---|
| ७ | संशयोपनिषत् | = | सन्दिग्धसर्वोपनिषत् । | ( × ) |
| ८ | मिथ्योपनिषत् | = | सर्वासत्योपनिषत् । | ( ० ) |

## ३—संशयोच्छेदाधिकारो द्विपर्वा उत्तमः काण्डः—

| | | | | |
|---|---|---|---|---|
| ९ | विशिष्टोपनिषत् | = | विशिष्टत्रिसत्योपनिषत् । | ( ३ ) |
| १० | ईश्वरोपनिषत् | = | ईश्वरैकसत्योपनिषत् । | ( १ ) |

## अथ प्रथमकाण्डसूची श्लोकाः

### १—तत्रादौ मूलोपनिषत् प्रथमं पर्व । ( १८ )

१ आभु—अभ्वमिति जगतो द्वे मूले ॥
२ आनन्दः-चेतना-सत्ता-इत्याभुरूपाणि ॥
कर्म्म-रूपं-नाम-इत्यभ्वरूपाणि ॥
३ आनन्द-चेतना-सत्तानां निरुक्तयः ॥
४ अभ्वत्रयनिरुक्तिः ॥
५ अभ्वत्रयाभुत्रयाभ्यामैकभाव्यम् ॥
६ आभ्वेवैकं वा, अभ्वमेवैकं वा, उभयं वेति मतत्रयविभागः ॥

अस्य विश्वस्य मूलं द्विधा, आभु-अभ्वश्चेति वा, द्रष्टृ-दृश्यं चेति वा, ज्ञानं-कर्म्म चेति वा॥ आनन्दो विज्ञानं सत्तेति त्रयमाभु। कर्म्म रूपं नामेति त्रयमभ्वम्॥ तत्र त्रीणि मतानि-आभ्वेवैकं सत्यं, नाभ्वमित्येकम्॥ १॥ आभु चाभ्वं चेति द्वे सत्ये इत्येकम्॥ २॥ अभ्वमेवैकं सत्यं, नाभु-इत्येकम्॥ ३॥ एषां त्रयाणां मतानामेवोपबृंहणान्यन्यानि सर्वाणि विज्ञानदर्शनानि॥

# अथ कृष्णत्रिसत्योपनिषत् चतुःखण्डा

## द्वितीयं पर्व। २४०

### १—प्रथमे सच्चिदानन्दखण्डे अष्टादश सूत्राणि १८—(८५)



### २—अथ द्वितीये जीवेश्वरखण्डे चत्वारि सूत्राणि ४— श्लोकाः (४२)

## ३–तृतीये दुःखप्रतिपत्तिखण्डे ऊनविंशति सूत्राणि १९ (४२)



## ४–चतुर्थे उपासनाखण्डे पञ्च सूत्राणि ५ (१५)



(४२) इति चतुःखण्डा कृष्णात्रिसत्योपनिषत्॥



# ३–अथ पूर्णद्विसत्योपनिषत् त्र्यधिकारा तृतीयं पर्व प्रारभ्यते ।

( ३६२ )

## १–प्रथमे ब्रह्मकर्माधिकारे नव सूत्राणि ९–( ६७ श्लो० )



## २–द्वितीये ब्रह्मकर्म्मणोः सम्बन्धाधिकारे चत्वारिंशत्सूत्राणि ४०

( १६७ श्लो० )

## ३—तृतीये ब्रह्मकर्म्मभ्यां सृष्टिक्रमाधिकारे त्रयोदश सूत्राणि १३ ।

( १८० श्लो० )

## अथ प्रत्ययैकसत्योपनिषत् चतुर्थं पर्व (५२ श्लो०)



इति प्रत्ययैकसत्योपनिषत् सम्पूर्णा ।



## अथ प्राणैकसत्योपनिषत् पञ्चमं पर्व ।

## इति प्राणैकसत्योपनिषत् संपूर्णा ।

---

# अथ यज्ञैकसत्योपनिषत् ।



## तत्र प्राणोर्गन्नानामन्योन्यपरिग्रहस्य यज्ञत्वं वाजसनेयानाम् । ६

# अथ मध्यमकाण्डपर्वसूची ।

## अथ संदिग्धसर्वोपनिषत् । १४९



## अथ असत्योपनिषत् ।

# अथ उत्तमकाण्डविषयसूची ।

## विशिष्टत्रिसत्योपनिषदि

## सर्वासत्यवादप्रतिवादस्य प्रथमखण्डस्य विषयाः—

### ( १ ) नास्तिकत्वप्रतिवादः—



### ( २ ) आत्मनास्तित्वप्रतिवादः—



### (३) प्रेत्यभावनास्तित्वप्रतिवादः—

## (४) सांपरायिकमार्गनास्तित्वप्रतिवादः—



## (५) परलोकनास्तित्वप्रतिवादः—



## अप्रामाण्यवादप्रतिवादस्य द्वितीयखण्डस्य विषयाः—



# अथ जीवजगत्-संशयवाद प्रतिवादस्य तृतीय-खण्डस्य विषयाः—

## (१) जीवसिद्धिवादः—

(२) जगत्सिद्धिवादः—



(३) नानात्वैकत्ववादः—



(४) ज्ञानसिद्धिवादः—



# अथेश्वर-जगत्-संशयवाद-
# प्रतिवादस्य चतुर्थ-खण्डस्य विषयाः—

(१) ईश्वरसिद्धिवादः—

## ( ४ ) उपासना वादः—



## अथ ईश्वरैकसत्योपनिषदि विषयाः—



इति मधुसूदनविद्यावाचस्पतिप्रणीतस्य ब्रह्मविज्ञानशास्त्रसंबन्धिनः संशयतदुच्छेदवादस्य विषयानुक्रमणिका संपूर्णा ॥ × ॥

भगवान् परमेश्वरः सुप्रसीदतु ॥



॥ श्री ॥

# अथ ब्रह्म विज्ञान शास्त्रे संशय-तदुच्छेद वादः प्रारभ्यते ॥

## तत्र विज्ञानोपक्रमाधिकारो नाम षट्पर्वा प्रथमः काण्ड ।

## तत्रादौ मूलोपनिषत् ॥

### आभु—अभ्वमिति जगतो द्वे मूले ।

१ यदस्ति किञ्चित् तदिदं प्रतीमो ऽविचालि शश्वत्स्थमनाद्यनन्तम् ।
प्रतिक्षणान्यान्य-विकार-सृष्टि-प्रवाहवत् तद् द्विविरुद्धभावम् ॥ १ ॥
विरुद्धभावद्वयसंनिवेशात् संभाव्यते विश्वमिदं द्विमूलम् ।
आभ्वभ्वसंज्ञे स्त इमे च मूले द्रष्ट्राभु दृश्यं तु मतं तदभ्वम् ॥ २ ॥
यद् द्रष्टृ तज्ज्ञानमिति प्रसिद्धं ज्ञाने प्रतीतो विषयस्तु कर्म्म ।
ज्ञानं प्रकाशो ऽस्त्यविचालिभाव स्तत्रान्यदन्यद् भवदस्ति कर्म्म ॥ ३ ॥
दिग्देशकालैरमितं तु यत् तज्ज्ञानं हि तद् द्रष्टृ तदाभु विद्यात् ।
दिग्देशकालैः प्रमितं त्वसद्वत् तत्कर्म तद् दृश्यमिदं तदभ्वम् ॥ ४ ॥

### आनन्दः—चेतना—सत्त्वेत्याभुरूपाणि ॥ १ ॥

### कर्म्म—रूपं—नामेत्यभ्वरूपाणि ॥ २ ॥

२ आनन्द आदावथ चेतनान्या सत्ता तृतीयेति तदाभुरूपम् ।
यत्कर्म्म यद्रूपमथास्य नामेत्येतत्त्रयं त्वभ्वमिति ब्रुवन्ति ॥ ५ ॥
आभ्वेव तु ब्रह्म न चेदमभ्वं ब्रह्मेति केचित् प्रलपन्ति तन्न ।
प्रत्यक्षमभ्वं जगतः स्वरूपं ब्रह्मैव तन्नाम यदस्ति किञ्चित् ॥ ६ ॥

### आनन्द—निरुक्तिः ।

३ (१) यात्यन्यदेशं त्वजहत् स्वदेशं विजायते किन्तु न हीयते तत् ।
यदक्षितं स्रष्टृ यदेति सुस्थं तस्मात् तदानन्दपदं वदामः ॥ ७ ॥

(२) आत्मायमानन्द इहास्ति देहे दूरस्थितं वस्तु विगाहते सः ।
तत्रैष पश्येन्न न चैष पश्येन्मनो बहिः प्रैति न हीयते ऽन्तः ॥ ८ ॥

## चेतना-निरुक्तिः ।

( ३ ) आनन्द एव प्रथमं स्वरूपं तच्चीयते यत् परितस्तदेति ।
स्वस्मिन् स्थितस्यास्ति गतिर्विदूरे सा चेतना तच्चयनं हि तस्य ॥ ९ ॥

४ ( ४ ) विजायते रूपमिदं यदस्माद्बहिर्गतादात्मन एव नाना ।
विज्ञायते ऽर्थः स इतीत्थमाहू रूपं हि विज्ञानमिदं द्वितीयम् ॥ १० ॥

## सत्ता-निरुक्तिः ।

५ विज्ञानमेतद् भवति द्विखण्डं यद् द्रष्टृ तस्मिंश्च निभाति दृश्यम् ।
यद् द्रष्टृ विज्ञानमदोऽथ तस्मिन् दृश्यं तु सत्तां प्रवदामि नाम्ना ॥ ११ ॥

## अभ्वत्रय-निरुक्तिः ।

६ द्विधा विभक्तं च तदत्र दृश्यं दिग्देशकालातिगतं च किञ्चित् ।
दिग्देशकालाश्रयमन्यदन्यत् तत्राविकारं स विकारमन्यत् ॥ १२ ॥
सत्तेयमत्रैकरसं यदीक्षे यत्वीक्ष्यते भिन्नरसं तदभ्वम् ।
यत्कर्म यन्नाम यदस्य रूपं तदभ्वमाभुन्युपपत्तिमेति ॥ १३ ॥

## अभ्वत्रयाभुत्रयाभ्यामैकभाव्यम् ।

७ यदाभु तद् द्रष्टृ यदभ्वमेतद् दृश्यं तदेतत् सदसत् सदेव ।
यद्भाति तद्वास्ति यदस्ति तद्भात्येकोऽयमानन्द इदं जगत्तत् ॥ १४ ॥

## मत विभागः ।

इदं पुरा दर्शनमेक मासीन्मतत्रयं तत्र बभूव काले ।
( १ )-अभ्वादनित्यात् पृथगाभु नित्यं तच्चाहमस्मीति परे न्यवीदन् ।

( २ )-नित्यं तदाभ्वस्ति च नित्यमभ्वं तत्राभु तद् ज्ञानरसं तथाहुः ।
अभ्वं तु तत् कर्म बलं च केचित् प्राहुर्न चान्यै न विनाऽन्यदस्ति ॥१६॥

( ३ )--सर्वं तदभ्वं सकलं ह्यनित्यं न चाभु किञ्चित् पृथगस्ति नित्यम् ।
सत्ता च विज्ञान मिदं ह्यनित्यं नानन्द आत्मास्त्यहमस्म्यनित्यम ॥ १७ ॥
इति न्यवीदंस्तु परे तदेषां मिथो विवादात् त्रिमतं प्रवृत्तम् ।
ततः परे संशयवादमाहुः परे तदुच्छेदवचांसि चाहुः ॥ १८ ॥

## ॥ इति मूलोपनिषत् ( प्रथमं पर्व ) ॥

# अथ कृष्णत्रिसत्योपनिषत् ॥

## १ सच्चिदानन्दखण्डः ।

### १ अस्तिभातिरसास्त्रिसत्यम् ।

१ सत्ता चिदानन्द इति त्रिसत्यं, सत्तैव विश्वं तु चिदेव विश्वम् ।
विश्वं तथाऽऽनन्द इतो न किञ्चित् परंत्रयं चैतदभिन्नरूपम् ॥ १ ॥
यदस्ति किञ्चिद् यदि तत्परीक्षे पश्याम्यसंख्यानिह भिन्नभावान् ।
रूढान्निगूढान् पुनरेषु वीक्षे सर्वावलम्बानिव तानिमांस्त्रीन् ॥ २ ॥
भावेऽप्यभावेऽपि यदस्ति नास्तीत्येवं भवत्यव्यभिचारतो धीः ।
यदस्ति यद्भाति रसः स भान्यस्तेष्वेषु सर्वं प्रतितिष्ठतीदम् ॥ ३ ॥

### २ सत्ताप्रत्ययसमं क्रियाभिः परीक्षा ।

२ सच्चाप्यसच्चापि यदत्र किञ्चिन्निरुच्यते न व्यतिरिच्य सत्ताम् ।
अस्तीति सर्वत्र समास्ति बुद्धिः सत्ताखिलानां विभुराश्रयस्तत् ॥ ४ ॥
सच्चाप्यसच्चापि यदत्र किञ्चिद्भवेन्न तत् प्रत्ययमन्तरेण ।
विज्ञायते तेन तदस्ति सर्वं विश्वाश्रयो ज्ञानमतोऽखिलानाम् ॥ ५ ॥
प्रीणन्ति वा यानि च विद्विषन्ति मिथोऽन्वितैस्तैरखिलार्थसिद्धिः ।
अन्योन्यमेतेषु सदोपकार्योपकारकत्वं सततान्वितेषु ॥ ६ ॥
उद्रिक्तमग्नेर्बलमूनितं जलादुद्रिक्तमम्भो बलमूनमग्नितः ।
स्थितिं पृथिव्या गतिमेति वायुतो भवेद्विरुद्धद्वियुतेः समीक्रिया ॥ ७ ॥
समीक्रिया शान्तिरयं प्रसादः सर्वं हि सर्वेण समत्त्वमाप्तम् ।
अक्षुब्धरूपं परिपूर्णशान्तं तमेवमानन्दमहं वदामि ॥ ८ ॥

### ३ शक्तिविकाशालम्बनैः परीक्षा ।

३ आनन्द इत्थं परमात्र शान्तिर्ज्ञानं तु योऽयं परमो विकासः ।
अस्त्यस्तिलोकव्यवहारहेतुः सत्तापि साक्षादिव कश्चिदर्थः ॥ ९ ॥
अप्यत्र सत्तां विदुरर्थकारितां क्रियैव सत्तापि च शक्तयः क्रियाः ।
बलं हि शक्तिर्बलमेव ताः क्रियाःसत्ता ततः संकलिता हि शक्तयः ॥ १० ॥
मूलं च तूलं द्विविधा हि शक्तयो मूलं बलं तूलमिमां क्रियां विदुः ।
क्रिया क्षणस्था च विनाशिनी च सा तन्मूलमद्याप्यविनाशि विश्वगम् ॥ ११ ॥
ज्ञानं च शक्तिर्न तु सा क्रियात्मिका विकासरूपैव न सार्थकारिणी ।
तस्मान्न सत्ताऽपि तु सा पृथग्विधा सत्ता तदन्तर्निहिता न सा पृथक् ॥ १२ ॥

स त्तापि ताः संकलिता हि शक्तयो यत्राहिता यस्य भवन्ति लक्षणम् ।
आलम्बनं शान्तमनन्तमद्वयं तमाहुरानन्दमयं प्रतीयते ॥ १३ ॥
आनन्द एवास्त्यखिलोऽयमर्थो यमत्र पश्यामि यमत्रवेद्मि ।
तमेकमन्यान्यविधाभिरीक्षे तास्ता विधाः शक्तिसमूहरूपाः ॥ १४ ॥

## ४ कुर्वद्रूपतोपलब्धिभूमभिः परीक्षा ।

४ अर्थान् प्रकुर्वन्ति बलानि सत्ता, येऽर्थाः प्रकाशा इह सोपलब्धिः ।
भूमा रसः पूर्णमिदं समस्तं यतः स आनन्द इति प्रतीमः ॥ १५ ॥

## ५ सत्यत्रयान्योन्याविनाभावः ।

५ त्रिष्वेव पर्य्याप्तमिदं समग्रं नातश्चतुर्थं किमपीह लोके ।
प्रत्यर्थमेषामपृथक्त्वमीद्ये नैकं विनाऽन्येन कदापि सिद्ध्येत् ॥ १६ ॥
अस्तीति तद्वेत्त्यथ वेत्यतोऽस्ति यो विद्यते वेत्ति च यं रसः सः ।
अर्थः प्रियो नोस्ति सदार्थलिप्सा ज्ञानं प्रियं नोस्ति सदा बुभुत्सा ॥ १७ ॥
बोध्यं सुखं वस्तु सदस्ति बोध्यं बोध्यं च बोधादपृथक् प्रबुद्धम् ।
ज्ञानं सुखं चास्ति हि वस्तु सत्तत् तस्मात् पृथङ् नातितरामिमानि ॥ १८ ॥

## ६ सामान्य-विशेषौ ।

६ ज्ञानं द्विधास्तीति च नास्ति चेति ताभ्यां पृथक्त्वव्यवहारसिद्धिः ॥
यावन्न नास्तीत्यवयाति तावन्न व्यक्तिता नो पृथगस्तिता धीः ॥ १९ ॥
अत्यन्तसूक्ष्मा पृथगस्तिताधीर्विशेष उक्तः क्रमशस्तु सा धीः ॥
प्रवर्द्धते व्यक्तिबहुत्वतस्तां जातिं च सामान्यमिदं वदन्ति ॥ २० ॥
सामान्यभिन्नाः परमा विशेषाः सामान्यमन्त्यं त्वविशेषमेकम् ॥
मध्यास्तु सामान्यविशेषरूपाः सर्वाश्च ताः प्रत्ययरूपसत्ताः ॥ २० ॥
या चात्र सामान्यविशेषवत्ता सत्तातिरिक्तानतिरिक्तभूता ॥
विभातिविज्ञानमिदं समन्तादालेशमापूर्णमनु प्रविष्टम् ॥ २२ ॥
आनन्दनामानमतीव गूढं सत्ता यथालम्बत एवमेतत् ॥
ज्ञानं च सामान्यविशेषरूपं प्रलम्बते तं सदसद्विवेकात् ॥ २३ ॥
इत्थं न जानामि कियानिहांशः सत्ता कियज्ज्ञानमथो कियान्वा ॥
आनन्द एकं तु विमूढभेदं प्रत्येमि तत्सच्चिदियं स मोदः ॥ २४ ॥

## ७ त्रयाणामयुतसिद्धिः ।

भात्यास्तिरेवं खलु भातिरस्त्या ताभ्यां रसस्ते च रसेन सिद्धे ॥
तेषां न पूर्वत्वपरत्वसिद्धिर्गत्यां यथा योगविभागसंस्था: ॥ २५ ॥

सैवोपलब्धिर्यदिहास्ति, यद्धोपलभ्यते यत् तदिहास्ति सत्ता ॥
यद्भाति सिद्धा ऽस्तिरथास्ति सिद्धा भाती रसस्तूभयसिद्ध एषः ॥ २६ ॥
न भातिपूर्वास्तिरथास्तिपूर्वा न भातिराभ्यां न विनाकृतो वा ॥
रसो ऽपि शक्यैत मतं तदेकमव्याकृतं व्याक्रियते त्रिधा यत् ॥ २७ ॥

## ८ त्रयाणामैकात्म्यम् ।

१ स्वस्मिन्न जानाति यदर्थसत्तामज्ञानतो दुःखमुदेति तर्हि ॥
तद्वैपरीत्यादिह वेत्ति यावत् तावत् सुखी तत्सुखमर्थबोधः ॥ २८ ॥
प्रत्येति शून्यां तु यदात्मशक्तिं दुःखं तु दारिद्र्यमिदं तदाह ॥
अशून्यता ज्ञानमिहात्मशक्तेः सुखाय तस्मात् सुखमर्थसत्ता ॥ २९ ॥
समुच्चिताः शक्तय एव सत्ता सा ज्ञायमानाहि सुखाय यस्मात् ॥
त एव तस्मात् त्रय एष आत्मा जगच्च तस्मात् त्रयमेतदस्ति ॥ ३० ॥
ज्ञानं पृथग् ज्ञानकुलात् तयोर्वा सत्ता पृथक् पश्यति यावदित्थम् ॥
तावज्जगद् यत्र तु सच्चितोः स्यादेकत्वमानन्दगतं स आत्मा ॥ ३१ ॥
सत्तां विदन्नात्मनि याति हर्षं तत्रास्तितासंविदि सोपि हर्षे ।
एकत्वमागत्य भवन्त्यपीता रूपत्रयी सा जगतोऽयमात्मा ॥ ३२ ॥
द्विधाऽयमानन्द इहास्ति पाप्मा प्रसङ्गतो या परमास्ति शान्तिः ।
स एव मुख्योऽथ रसप्रवेशान्मृत्यावुदेति क्षणिकः प्रसादः ॥ ३३ ॥
आनन्द एवामृतमस्ति यस्मात् संसृज्य तस्माद् रसमेष मृत्युः ।
यावन्तमात्मानमुपैति तावानानन्द आत्मा विभवेषु तेषु ॥ ३४ ॥
शरीरमादौ वनिता तनूजः क्षेत्रं हिरण्यं पशवो गृहाणि ।
अन्नानि दासा महिमात्मनोऽयं यत्रैष आत्मा विभवेद् विजानन् ॥ ३५ ॥
यावद् विजानाति ममेदमेवं वित्तं स तावानहमस्मि चेति ।
सा तावती तृप्तिरमुष्य तस्माद् विज्ञानमानन्द इति प्रसिद्धिः ॥ ३६ ॥
विज्ञानमानन्दमितीष्यते वा विज्ञानमानन्द इतीष्यतेवा ।
न संशयोऽत्र क्रियतामयं यत् क्षरेऽक्षरे चापि परं निगूढम् ॥ ३७ ॥
विज्ञानमानन्दमितीष्यतेऽवरं विज्ञानमानन्द इतीष्यते परम् ।
ज्योतिस्तु विज्ञानमिदं परं ध्रुवं रसेन भूम्ना न विभिद्यते क्वचित् ॥ ३८ ॥

## ९ दुःखानुभव-हेतुः ।

२ यतः स आत्मा विभवत्यमीभिर्देहप्रजास्त्रीपशुमेदिनीभिः ।
संपद्यते तेन महानयं यत् स्वं वैभवं तन्महिमा च संपत् ॥ ३९ ॥
यतो ममत्वं क्रमते तदेषु तेनात्मनोऽहंकृतिरेषु दृष्टा ।
तेषां तदेकस्य च हानितोऽयमात्माऽल्पवद् भाति तदस्य दुःखम् ॥ ४० ॥
तस्मात् तदेकैककलाविनाशक्रमेण यावत् क्रमते विनाशः ।
आत्मार्तिमायाति सतान्तरेणोदरे विभूत्याः स्वमहिम्नि तावत् ॥ ४१ ॥

सार्तिः परा या मृतिरस्य जन्तोस्ततोऽन्यथाऽऽनन्दकलासमृद्धिः ।
मृत्युर्न चेत् तर्हि मताऽस्य सत्ता सत्तैव साऽऽनन्द इतीष्यते तत् ॥ ४२ ॥

## १० एकत्वे भिन्नप्रतिपत्तिहेतुः ।

३ आनन्दविज्ञानरसप्रतिष्ठास्वेकत्वमित्थं यदुदाहरन्ति ।
तच्चाविनाभाववशेन बोध्यं न चान्यदन्येन विना कृतं स्यात् ॥ ४३ ॥
ज्योतिः प्रतिष्ठा विधृतिश्च भिन्नाः शक्यं न वक्तुं न विचिन्तितुं वा ।
किं स्यादभातं कथमप्रतिष्ठं भायान्न भायादधृतं न च स्यात् ॥ ४४ ॥

४ एकैव सत्ता प्रथते यदेषां तस्मात् त्रयं तत् पुनरेकमिष्टम् ॥
विज्ञानमेषां त्रिविधं पृथक् स्यात् तस्मात् त्रिधा व्याक्रियते तदेकम् ॥४५॥
सत्ता प्रभिन्ना प्रतिपत्तिभेदतः सत्ता प्रभेदादपि धीः प्रभिद्यते ॥
रसस्तु भिद्येत तयोः प्रभेदतस्तथा च सामान्यविशेषसंभवः ॥ ४६ ॥
रसे प्रतिष्ठावशतः पृथक्त्वं क्वचित्तु विज्ञानवशात् पृथक्त्वम् ॥
क्वचित्पुनः स्यादुभयोः पृथक्त्वाद् रसे पृथक्त्वं तदिदं निरूह्यम् ॥ ४७ ॥
उष्णीषवासोवरतन्तुतूलमृदूविज्ञानभेदेपि न सत्तया पृथक् ॥
सत्तास्वनन्तास्वपि गौरितीष्यते यदेकमेतत् प्रतिपत्त्यपेक्षया ॥ ४८ ॥

## ११—सत्ताचेतनानन्दानां भेदाभेदसिद्धान्तः ।

५ तेनात्र धर्म्मा अमृता इमे त्रयो भिन्ना अभिन्नाश्च परस्पराश्रयाः ॥
रूपं यदेकं परमुच्यतेऽमृतं तत्रैष मृत्युर्बहुधैत्य नृत्यति ॥ ४९ ॥

## १२—त्रयाणां वैरूप्यम् ।

यद्यप्यमीषामिदमित्थमैक्यं प्रतीयते किन्तु तथापि तानि ॥
भिन्नानि रूपाणि यतः स्वरूपं तेषां पृथक्त्वेन मिथो विभाति ॥ ५० ॥
भात्येव सिद्धानि बहूनि विद्धो दिक्कालसंख्यानु विधानि नास्त्या ॥
अस्त्येव सिद्धानि बहूनि लोके न भाति भिन्नाण्डविधानि यानि ॥ ५१ ॥
यत्रास्तिरत्रापि रसोऽथ भाति यत्रास्ति तत्रापि रसोस्ति तस्मात् ॥
ताभ्यां तृतीयोस्ति रसः पृथग्वन्न सर्वथैषां तत ऐक्यमाहुः ॥ ५२ ॥
तथापि यत्रैक्यमिवास्फुटानामुन्मुग्ध रूपत्ववशादमीषाम् ॥
आत्मा स उक्तोऽथ परिस्फुटत्वे तान्येव सर्वाणि जगन्ति सन्ति ॥ ५३ ॥

## १३—सच्चिदानन्दस्यात्मत्वजगत्त्वे ।

सन्नभ्य पिण्डोऽस्य करप्रसारः साहस्र आनन्द उतैष एव ॥
अन्यात्मघाते न विवर्तमानश्चिदित्थमेतत्त्रिवृदेव सर्वम् ॥ ५४ ॥

अर्चिर्विदात्मा, परितोऽस्य रश्मिस्त्वानन्द आहन्यत एष यस्मिन् ॥
ततः परावर्तितदीधितिश्चित् तत्सद् यदाहन्ति स चान्य आत्मा ॥ ५५ ॥
आनन्द उक्तोंऽशुरयं प्रसारणाद् बहिःसतोऽर्थांश्चिनुते स आत्मनि ॥
तस्मात्परावर्तितएष चिद्भवेत् सन्तन्य आत्माखिलशक्तिसंचयः ॥ ५६ ॥
आनन्द आत्मा, परितोंऽशवश्चिचिदेव संस्पृश्य परं तथावत् ॥
रूपं दधातीति सदाहुरेतत् तदाहुरन्तर्जगदात्मनोऽस्य ॥ ५७ ॥
इत्थं मतानि त्रिविधानि सन्तु त्रेधापि तादात्म्यवशादमीषाम् ॥
भेदोऽप्यभेदोपि न बाध्यतेऽर्थःक्लृप्ता ह्यखण्डात्मनि सन्ति खण्डाः ॥ ५८ ॥
एकैक इत्थं त्रिवृदेष आत्मा सोऽणुर्महत्स्थः स पुनर्महत्स्थः ॥
आत्माऽऽत्मनीत्यैवमशेष एषोस्त्यात्मैव नान्यज्जगदस्ति किञ्चित् ॥ ५९ ॥
आनन्दविज्ञान युगं सतोऽस्यात्मनोऽन्तरङ्गं न विना ततः सन् ॥
अथास्य साहस्रमताः समस्ता अङ्गानि बाह्यानि भवन्ति सन्तः ॥ ६० ॥
आत्मा द्विधाऽङ्गोपहितोस्ति योऽङ्गी योऽङ्गी च सर्वाङ्गविशिष्ट रूपः ॥
इत्थं द्विधा लौकिकदृष्टि भेदाद्विश्वं स आत्मैव तदात्मजं वा ॥ ६१ ॥
स सच्चिदानन्दमयोऽयमात्मा तत्सच्चिदानन्दमयं जगद्वा ॥
आत्मैव विश्वं जगदेव वात्मा नानात्मभेदा अथवैक आत्मा ॥ ६२ ॥

## १४–कर्मणः सत्तायामन्तर्भावः ।

सत्ता पृथक्त्वेन पृथक् स बोधो बोधस्तथानन्दपृथक्त्वहेतुः ॥
पूर्णा तु सत्ता यदि चैकरूपाऽस्त्यानन्दपूर्णः सहि बोध पूर्णः ॥ ६३ ॥
क्षोभात्मकं कर्म ततो विशेषा एकं त्वनेकं प्रतिभाति तेभ्यः ॥
कर्माणि यत्रैतदकर्म चात्मा स्वेनाविशिष्टस्तत एव पूर्णः ॥ ६४ ॥
बलं यदुन्मुग्धमिहैकरूपं मूलं तदात्मा तत एव सर्वम् ॥
जगद्बभूव क्रमशस्त्रयाणां तेषां पृथक् स्फोटनकर्मणैव ॥ ६५ ॥
यत्कर्मरूपं तु विदुश्चतुर्थं बलानि तूलानि तु शक्तयस्ताः ॥
समुच्चिताः शक्तय एव सत्ता तस्मान्न तत्कर्म पृथक् पदार्थः ॥ ६६ ॥
एकं यदानन्दमयं स्वरूपं नानेति कृत्वा प्रतिभाति तत्र ॥
अन्तर्व्यवच्छेदकरी तु शक्तिर्विशेषमाकारमिहादधाति ॥ ६७ ॥

## १५—आनन्दविज्ञानसत्तानां कृष्णशुक्लद्वैविध्यम् ।

विज्ञानमानन्द इयं च सत्ता प्रत्येकमेतद् द्विविधं निरुक्तम् ॥
पश्यन्ति लोका यदिदं तु शुक्लं निण्यं* न पश्यन्ति तदस्ति कृष्णम् ॥ ६८ ॥
आनन्द एष द्विविधोस्ति तावच्छान्तः समृद्धश्च, रसो य एकः ।
शान्तः स, यो भिन्नरसो विभिन्नैरर्थैः कृतात्मा स मितः समृद्धः ॥ ६९ ॥

---

*निण्यमिति वैदिकभाषाशब्दोऽन्तर्हितार्थः ॥

स्यान्निर्विकल्पं स विकल्पमित्थं द्विधैव विज्ञानमिदं यदर्थैः ।
आकारित तत् सविकल्पमाहुः स्यान्निर्विकल्पं विषयागृहीतम् ॥ ७० ॥
सत्ता तु सामान्यमियं द्विधा स्याद् या निर्विशेषा सविशेषका या ।
प्रत्यर्थभिन्ना सविशेषका स्यात् सामान्यमन्यं त्विह निर्विशेषम् ॥ ७१ ॥
समृद्धमेते सविकल्पमेते पश्यन्ति लोकाः सविशेषमेते ।
तान्येव रूपाण्यभिमत्य, लोकातीतानि नात्यानि विमर्शयन्ति ॥ ७२ ॥
विज्ञास्तु लोकाभिमतानि तानि ब्रुवन्ति तात्कालिकयोगजानि ।
वैकारिकत्वाच्च विनश्वरत्वान्नात्मस्वरूपाणि भवन्ति तानि ॥ ७३ ॥
रसस्य किञ्चिद्विषयावगाहिज्ञानस्य योगो ध्रियतेऽत्र यावत् ।
तावत् स आनन्द उदेति, पश्चाद् योगे विनष्टे स विनाशमेति ॥ ७४ ॥
द्रष्टाहि दृश्येन समेत्य सद्यो दृश्याकृतिं यात्यनुरज्यमानाम् ।
तदस्ति विज्ञानमथो वियुक्ते दृश्येपि सांस्कारिकमस्ति भानम् ॥ ७५ ॥
सत्तापि सामान्यमनेकशक्तिप्रपञ्चरूपं बहुनिष्ठमेकम् ।
योगं बहूनामनपेक्ष्य नूनं नोदेति सामान्यमिति प्रपद्ये ॥ ७६ ॥
यं कामिनीं काञ्चनमाप्यलोका आनन्दमत्रानु भवन्ति सोऽयम् ।
आनन्दमात्रानुभवोस्ति, न त्वानन्दोस्ति, सोऽन्योऽनुभवात् पदार्थः ॥ ७७ ॥
विज्ञानमेतद् विषयानुरक्तं विज्ञायते नो विषयातिरिक्तम् ।
स्वरूपतो ज्ञानमिदं न वीक्षे ज्ञाने गृहीतान् विषयान् समीक्षे ॥ ७८ ॥
अस्तीति बुद्धिर्नतु बुद्धिरस्तिः सत्ताश्रयोऽर्थो न स एव सत्ता ।
तस्मादिमे केवलतर्कगम्यास्त्रयोऽपि लोकातिगताः पदार्थाः ॥ ७९ ॥
पश्यन्ति लोका इतरे यथार्थानुपेक्षयन्ते तु मनस्विनस्तान् ।
यथा तु पश्यन्ति मनीषिणोऽर्थास्ते प्राकृतानां न दृशं गताः स्युः ॥ ८० ॥

## १६ भूमाणिमानौ ।

अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।
तदात्मरूपाण्यनु चार्थमर्थभूम्नाप्यणिम्नापि च वृत्तिभागः ॥ ८१ ॥
सन्तीह भौमास्तदिहास्ति भूमियं तैजसाः सन्ति तदस्ति तेजः ॥
भूम्यस्ति तेजोस्ति तदस्ति भूतं भूतानि देवाश्च जगत् तदस्ति ॥ ८२ ॥
जगन्ति सन्तीह बहूनि भिन्नान्येकोयमात्मा स परात्परो ऽस्ति ॥
सैकैव सत्ता स तथैक आत्मा तस्मादभिन्नं द्वयमेतदाहुः ॥ ८३ ॥
सामान्यमेकं बहुभिर्विशेषैः प्रतीयते तत् क्रमवर्द्धितं स्यात् ॥
अन्त्यं तु सामान्यमवैमि सत्तां तज्ज्ञानमेवं विभु सो ऽयमात्मा ॥ ८४ ॥
आनन्द एवास्ति बलस्य योनिरानन्दतः कर्म तु चेष्टितं यत् ॥
यावद्भयं यावदिहास्ति शोकस्तावद्बलं नश्यति नूनमस्मिन् ॥ ८५ ॥
दुःखप्रतीतेः परमा तु काष्ठा मृत्युस्ततो जीवनमस्ति सौख्यम् ॥
सानन्दमात्रा कृमिकीटपद्यादिष्वेधते शक्तिमनु प्रवृद्धाम् ॥ ८६ ॥

नृभ्यो नृपाणां नृपतः स्वराजां तेभ्योपि विद्वत्तमयोगिनां च ॥
तेभ्यः सुराणां क्रमशः प्रवृद्धा याऽनन्दसत्ता परमेश्वरः सः ॥ ८७ ॥
भूमाऽणिमा स्यादणिमा च भूमा पृथग्बलोऽयं बलमस्ति यस्मिन् ॥
स एक एवास्त्यणिमा स भूमा रसः स आनन्द इति प्रतीयात् ॥ ८८ ॥

## १७—आनन्दस्योत्पत्तिस्थितिहेतुत्वम् ।

स्त्रीपुंसयोर्यत्र न हर्षसंभवस्तदा न गर्भस्थितिरिष्यते क्वचित् ॥
गर्भच्युतिः स्याच्च विषादसंस्रवादानन्दतः सर्वमिदं प्रजायते ॥ ८९ ॥
न जीवने यस्य तु हर्षसंभवश्चिरं न जीवेत् स इहार्तिसंप्लुतः ॥
प्रतिक्षणं जीवति हर्षमात्रया स सर्वतोऽन्नादिह तृप्तिमश्नुते ॥ ९० ॥
यदोषधीर्वारि यदग्निवायू वाचं बलं ज्ञानमिहान्नमत्ति ॥
स सर्वतस्तृप्तिमुपेत्य शश्वद्धर्षं स गृह्णाति स हर्ष आत्मा ॥ ९१ ॥
एतेषु वा सप्तविधेषु भोग्येष्वन्नेषु नानन्दरसो यदि स्यात् ॥
आनन्द आत्मा विभवेन्न तेषु महांश्च न स्यान्न च तृप्तिमेयात् ॥ ९२ ॥
प्राण्यादिहान्यादपि कः क्षणं वा नानन्दमाकाशमिदं यदि स्यात् ॥
शृणोति यत् पश्यति वेत्ति यद्वा धृतिं तदाप्नोति सुखं तदिष्टम् ॥ ९३ ॥
आहारतो वाथ विहारतो वा सा निर्वृतिर्यत्र रमेत लोके ॥
सर्वत्र लोके रमते हि लोकस्तस्मात् स आनन्द इहास्ति भूमा ॥ ९४ ॥

## १८—आनन्दविज्ञानसत्तानां समष्टेरव्याकृतरूपत्वम् ।

आनन्द इत्थं परमोऽथ सत्ता परा, परं ज्ञानमिति त्रयाणाम् ॥
यत्रैक्यमायाति न तत्र सत्ता ज्ञानं स आनन्द इति प्रभेदः ॥ ९५ ॥
ज्ञानानि यावन्ति सुखानि यावन्त्येवं नु यावत्य इहार्थसत्ताः ॥
एषां समष्टिर्ध्रुवमस्ति काचित् स एव आत्माऽत्र न तद्विभेदः ॥ ९६ ॥

इतिप्रथमः सच्चिदानन्दखण्डः संपूर्णः ॥

---

# अथ जीवेश्वरखण्डः प्रारभ्यते ।

## १—ईश्वराणां जीवत्वम् ॥

इत्थं त्रयाणामविनाकृतत्वात् सत्ताचिदानन्दमयो य आत्मा ॥
स एक एव द्विविधोऽयमासीज्जीवोऽयमन्यः परमेश्वरोऽन्यः ॥ ९७ ॥
विश्वं यदेतत् प्रतिभात्यनन्तं स एक आत्मा परमेश्वरोऽस्ति ॥
अन्तर्भवन्ति प्रमिताङ्गसंस्थास्तत्रात्मभेदा नितरामसंख्याः ॥ ९८ ॥
जीवा हि ते तेषु भवन्ति जीवास्तत्रापि जीवा बहवो निविष्टाः ॥
जीवैः समाक्रान्तमिदं शरीरं ह्यं कैकजीवस्य तथेश्वरस्य ॥ ९९ ॥
सूक्ष्मातिसूक्ष्मैः कृमिभिः शरीरं व्याप्तं नराणां पशुपक्षिणां च ॥
पृथ्वी जलं तेज इदं स वायु व्योमापि जीवैः परितः परीतम् ॥ १०० ॥
व्योमादिभिस्तैरमितैश्च जीवै र्ब्रह्माण्डमेतत्परितः परीतम् ।
हिरण्यगर्भः स हि जीव आद्यस्तथाविधाः सन्ति परेप्यनन्ताः ॥ १०१ ॥
हिरण्यगर्भं प्रथमं तुजीवं केचिद्वदन्तीश्वरमीश्वराः स्युः ।
उपासकानां समये प्रसिद्धा अपेक्षितास्ते परमेश्वरस्थाः ॥ १०२ ॥
बहुत्वहेतोः प्रमितत्वहेतोर्जन्मप्रणाशक्रमवत्वहेतोः ।
अन्यात्मगर्भाभिनिवेशहेतोस्त ईश्वराः सन्ति तु जीवतुल्याः ॥ १०३ ॥
य एक आत्मा परमेश्वरोऽन्यः स नान्यगर्भाशयसंनिविष्टः ।
न जन्मनाशौ न च तस्य सीमा जहाति न प्राणमतो न जीवः ॥ १०४ ॥
तत्रास्ति सत्ताऽखिलविश्वसत्ता ज्ञानं तु यावद्विषयैकभानम् ।
रसस्तु पूर्णं जगदस्ति भातं परं न तस्मादखिलात्मनोऽस्ति ॥ १०५ ॥

## २ ज्ञानक्रियार्थप्रपञ्चः ।

तत्रेह तावत् परमेश्वरे स्थिताः याः शक्तयोऽशेषविधा घनात्मना ।
त्रिधा विभक्ताः प्रभवन्ति ता इमा ज्ञानक्रियार्थोद्भवनप्रयोजिकाः ॥ १०६ ॥
किञ्चिद्बलं चेतनयाऽनुसंहितं ज्ञानेऽक्रिये वर्तयति क्रियां ततः ।
ज्ञानोदयाः स्याद्विषयावगाहनात् सा ज्ञानशक्तिः प्रथिता प्रकाशिका ॥ १०७ ॥
किञ्चिद्बलं तु क्षणभङ्गुरां क्रियां गत्यादिरूपां जनयद्विनश्यति ।
प्रत्यर्थचेष्टा यत उद्भवन्ति सा मता क्रियाशक्तिरियं प्रवर्तिका ॥ १०८ ॥
किञ्चिद्बलं प्राप्य रसं तमेकवत् स्थितिं सुविच्छिद्य करोत्यनेकवत् ।
ततोऽर्थसृष्टिर्भवतीह कृत्स्नशस्तामर्थशक्तिं विदुरर्थसर्जिकाम् ॥ १०९ ॥
ता एव वाक्प्राणमनांसि चक्षते प्राणात् क्रिया, ज्ञानमिदं मनोमयम् ।
वागर्थशक्तिर्भवति प्रकाशनं चेष्टा च वस्तुस्थितिरेभिरन्वहम् ॥ ११० ॥
सा चार्थशक्तिस्त्रिविधा प्रसिद्धा विक्षेपकामावरणप्रभेदात् ॥
विज्ञानतः काम उदेत्यशान्तानन्दं स विक्षेप्य करोत्यशान्तम् ॥ १११ ॥

शान्ते रसे यावति काचिदिच्छा विक्षे[illegible] तावति रूपमेति ।
विक्षेपसीमावरणं हि वस्तु स्वरूपमु[illegible] [illegible]यतीति मन्ये ॥ ११२ ॥
विक्षिप्यमाणो हि रसः प्रशान्ताद् रसाद्विभेदेन विभाति सद्यः ।
यावान् रसः सोऽस्ति ततः परस्तात्समन्ततो नास्ति तथाऽऽवृतिः सा ॥११३॥
इत्थं विभिन्नावरणप्रभावतो विभिन्नवस्तूनि विभान्ति सर्वतः ।
छन्दांसि तान्याकृतयश्च ता इमाः स्युर्जातयो व्यक्तय आसु चान्तराः ॥ ११४ ॥
एतैर्विशेषैः कृतया विभिन्नया धिया परिच्छिद्य परिग्रहादयम् ।
रसः स एको बहुधा प्रतीयते तां सृष्टिमाहुः पृथगस्तिताधियम् ॥ ११५ ॥
न वस्तुतः काचन सृष्टिरिष्यते रसस्य नैकस्य हि भेदसंभवः ॥
विज्ञानमात्रं तु विभिन्नकामजाद्विक्षेपतो भिन्नतया पृथक्त्वकृत् ॥ ११६ ॥
एकं जलं छन्दसि भेदतो यथा सरित्सरः सागरनिर्झरादिभिः ।
उल्लोलवीचीभ्रमिफेनबुद्बुदादिभिश्च रूपैः प्रतिपद्यते पृथक् ॥ ११७ ॥
तथा स एको रस एव सर्वतः पूर्णः प्रशान्तोऽखिलशक्तिरूपया ।
अस्त्या विभातीति विभिन्नशक्तिभिर्विभिन्नबुद्ध्या बहुधावसीयते ॥ ११८ ॥
इत्थं विभिन्नं प्रतिपन्नमस्य यद्रूपं हि तद्विश्वमिदं प्रसिद्ध्यति ।
अपोह्य भेदं यदि सर्वमेकवद्वीक्षे स आत्मा परमेश्वरो मतः ॥ ११९ ॥

## ३ क्षोभेऽपि रसस्य शान्त्यभङ्गः ।

विक्षेपकामावरणप्रभावादात्यान्तकक्षोभ इहास्तु शश्वत् ।
रसः स्वतस्त्वेष परः प्रशान्तः क्षुभ्यन्त्य एता इह शक्तयः स्युः ॥ १२० ॥
पूर्णोऽयमाकाश इहास्ति वायुग्रामः परिक्षुब्धतरः समन्तात् ।
क्षुभ्यत्सु वायुष्वपि नैव जातु क्षुभ्यत्यमुष्यास्ति न शान्तिभङ्गः ॥ १२१ ॥
प्रत्येकविक्षुब्धमरुत्सु गूढं व्योमास्ति न व्योम्नि तु जातु कम्पः ।
क्षुब्धासु शक्तिष्वभितो रसोऽयं रसे तु न क्षोभ इति स्म केचित् ॥ १२२ ॥
या चोन्नतिर्या च नती रसौ तौ याऽवस्थितिर्या च गती रसौ तौ ।
यदस्ति यन्नास्ति तथा रसौ तौ क्षोभेपि किञ्चिन्न रसात् पृथक् स्यात् ॥ १२३ ॥
दिग्देशकालावयवा रसोऽयं विशेषसामान्यविधा रसोऽयम् ।
भिदा पृथक्त्वाकृतयो रसोऽयं क्षोभेऽपि किञ्चिन्न रसात् पृथक् स्यात् ॥१२४॥
ज्ञानेन तस्मिन् प्रभवन्तु भेदा ज्ञानं रसः सर्वविधा रसः सः ।
रसो रसत्वान्न यदि च्यवेत क्षोभेऽपि किञ्चिन्न रसात् पृथक् स्यात् ॥ १२५ ॥
ज्ञानक्रियालम्बनमन्यदाभ्यां ज्ञानक्रियाभ्यां स रसो रसात्तु ।
ज्ञानक्रिये अव्यतिरिक्तरूपे क्षोभेपि किञ्चिन्न रसात् पृथक स्यात् ॥ १२६ ॥
ज्ञानक्रियाभूः प्रकृती रसोऽयं ज्ञानक्रियाभ्यां विकृती रसोऽयम् ।
ज्ञानक्रिये ते च यतो रसोऽयं क्षोभेऽपि किञ्चिन्न रसात् पृथक स्यात् ॥ १२७ ॥
तदित्थमालम्बनवत् प्रतीतो रसः स आनन्द इति प्रसिद्धः ।
सत्तेव विज्ञानमिव प्रतीतः स एक एव त्रिविधो रसः स्यात् ॥ १२८ ॥

# ४ जीवानां परमेश्वरत्वसंपत्तिः ।

सत्ता चिदानन्दमयो य आत्मा स सच्चिदानन्द इति प्रसिद्धः ।
एको विभुर्यः परमेश्वरोऽयं जीवास्ततः स्युः प्रमिता असंख्याः ॥ १२९ ॥
अर्थक्रियाकारितया तु सत्ता जीवेषु दृष्टा, यदिमे शरीरे ।
रसासृगाद्याः प्रभवन्ति भावास्तमेकमात्मानमनुप्रविष्टाः ॥ १३० ॥
जीवेषु विज्ञानमिदं प्रकाशि तदक्षसापेक्षमुदेति तस्य ।
क्रियाश्चतस्रो, विषयप्रक्लृप्तिस्तद्धारणं तल्लयनप्रबोधौ ॥ १३१ ॥
प्रकल्पनात् सृष्टिरमुष्यरूपं तद्धारणाद्भाति लयात्सुषुप्तिः ।
उद्बोधनाज्जागृतिरस्ति जीवे संभाव्यते तत्परमेश्वरेऽपि ॥ १३२ ॥
ज्ञाता अपीमे निखिला इहार्थाः पर्य्यायतो भान्ति समं न सर्वे ।
य एक उद्बोधति तत्र चान्ये सर्वे प्रसुप्ता इति हि क्रमोऽस्ति ॥ १३३ ॥
अत्यल्पमात्रस्य मितस्य जीवस्यैतस्य वृद्ध्यै च सततोत्सुककस्य ।
शक्त्युन्नतेरात्मनि तत्र सत्ता विज्ञानभूम्ना रसमानवृद्धिः ॥ १३४ ॥
योऽस्तीह जीवः सहजाल्पमात्रावच्छिन्न एषोऽस्ति परेश्वरांशः ।
क्रमेण स स्वावरणं विभिन्दन् भूमानमानन्दरसं याति ॥ १३५ ॥
अयं स आनन्द इहास्ति जीवे यदा यदा वृद्धिमसावुपैति ।
क्रमात्तदानन्दमुपैति सोऽन्ते निरावृते भूम्नि महेश्वरः स्यात् ॥ १३६ ॥
सत्ता चिदानन्दमयः परेशः सत्ता चिदानन्दमयः स जीवः ।
सत्ता चिदानन्दमयं जगत्तत् तस्मात् त्रिसत्यं प्रवदामि नित्यम् ॥ १३७ ॥
सन्नेष आनन्द इयं तु सत्ताऽसती चिदेषा सदसत्स्वरूपा ।
यत् सच्चिदानन्दमयं समस्तं तेनाहुरेतत् सदसत्पदेन ॥ १३८ ॥

॥ इति द्वितीयो जीवेश्वरखण्डः संपूर्णः ॥

---

# अथ दुःखप्रतिपत्तिखण्डः प्रारभ्यते।

## १ आत्मनो नित्यानन्दत्वम्।

आत्मा सदानन्दमयोऽस्त्ययं वा स सर्वदा दुःखमयोऽस्ति किंवा॥
भयं स दुःखं लभते कथं वा किमस्तिदुःखं किमिदं भयं वा॥ १३६॥
अत्रोच्यते द्वैधमिदं निरुक्तं रसो बलं चेति पृथक् स्वभावम्॥
रसोऽयमात्मा बलमात्मशक्तिः स नित्यमानन्दमयो रसत्वात्॥ १४०॥
सर्वो जनः कामयते हि सौख्यं प्रीणाति यत्कामयते तदैव॥
तत्रात्मने कामयते हि कामान् कामः स आत्मैव ततः सुखं सः॥१४१॥
उपप्लवं दस्युभिरेष लब्ध्वा स्त्रीपुत्रवित्ताद्यखिलं विहाय॥
आत्मानमादाय पलायतेऽयं तस्मात् प्रियः सर्वत एष आत्मा॥ १४२॥
यदल्प मल्पं तदिहार्तमार्तं यथा तु भूमा सुखमिष्यते तत्॥
परस्तु भूमाऽस्त्यमृतेऽतिमात्रे ततः परानन्दमयः स आत्मा॥ १४३॥
भयं हि कम्पः स्थितिविच्यवोऽसौ तत्कर्ममृत्युः स इहापदिष्टः॥
ध्रुवं प्रशान्तं त्वमृतं ततोऽन्यत् ततः सदानन्दमयः स आत्मा॥ १४४॥
भयं मितस्य प्रबलाद् द्वितीयादिदं त्वमात्रामृतमद्वितीयम्॥
न कम्पयोग्यं न ततो वरिष्ठं ततोऽभयानन्दमयः स आत्मा॥ १४५॥
रसोऽन्नमाधीयत आत्मने यत् तृप्तिर्गतिस्तस्य रसस्य दृष्टा॥
विज्ञानमानन्द इतीह तृप्तौ तत्तृप्तिजानन्दमयः स आत्मा॥ १४६॥
सुखं रसो हीति वदन्ति विज्ञा रसं हि लब्ध्वा सुखिता भवन्ति॥
रसोऽमृतं कार्य्यरसानुभावात् ततो रसानन्दमयः स आत्मा॥ १४७॥

## २ आत्मन्नैविध्ये पराक्षरयोर्दुःखाभावः। क्षरस्य दुःखयोगित्वम्॥

आत्मा द्विधा कश्चिदखण्ड एकः स निष्कलः कर्मभिरस्ति तस्मात्॥
नायं विचाली न भयं न दुःखं तस्यास्ति शोका न जरा न कामः॥ १४८॥
कर्मात्मनाम्ना त्ववरो य आत्मा स सर्वकामः सकलः सकर्मा॥
क्षरोऽक्षरश्च द्विविधः स तत्राक्षरोऽविचाली न स दुःखयोगी॥ १४९॥
यः प्रज्ञ आत्मा क्षर एष कामाद् विचाल्यतेऽल्पज्ञतया हि सोऽज्ञः।
तस्यैव दुःखं च भयं च मन्ये प्रज्ञस्य स द्वन्द्वमयो निरुक्तः॥ १५०॥

## ३ दुःखादिस्वरूपाणि।

आत्मा विचाल्येत भयं तदुक्तं या चात्महानिः खलु तन्नु दुःखम्।
स्वास्थ्यं हि तस्याविचलत्वमुक्तं यात्वात्मवृद्धिः सुखमुच्यतेतत्॥ १५१॥

[1]प्रज्ञप्रकम्पः प्रथमं हि दुःखं [2]प्रज्ञाङ्गकम्पा भयमुग्रदुःखम् ।
प्रज्ञावसादोऽतिशयेन दुःखं दुःखस्य काष्ठा पर[4]मात्मनाशः ॥ १५२ ॥
दुःखं चतुःसंस्थमिति ब्रुवन्ति तत्र द्वितीयं [1]भयमेव दुःखम् ।
प्रज्ञस्य कम्पे यदिवाऽवसादे [2]शून्यात्मता दुःखमिदं न भीतिः ॥ १५३ ॥
[1]कामावसादस्तु दरिद्रताख्यं स्यादा[2]त्मकम्पो भयनाम दुःखम् ।
[3]आत्मावसादः किल शून्यदुःखमित्थं त्रिधा केचन दुःखमाहुः ॥ १५४ ॥

## ४ आत्मनि भोग्यान्तरायाद् दुःखोपपत्तिः ।

चिरं स तिष्ठत्यपि यत्र देशे तत्रैव भूयो रमते स्वभोगैः ।
ततो बहिष्कारकृतौ त्वमुष्य प्रतीयते चेतसि दुःखभावः ॥ १५५ ॥
तत्रात्मनस्तस्य सतः स्वभोग्ये विज्ञानतो या ममता निविष्टा ।
निर्वतते सा तदिहात्मनस्तद् भोग्यं पृथक् स्यात् तदिहास्ति दुःखम् ॥ १५६ ॥
यान्येव भोग्यानि पुरा सुखानि तान्येव संप्रत्यसुखानि भान्ति ।
भोग्यस्थितात्मस्थितयोश्च तस्मादानन्दयोरन्तरमेतदाहुः ॥ १५७ ॥
तेनायमानन्दमयः स आत्मा तेनेदमानन्दमयं च भोग्यम् ।
एकं पुरासीदुदरेऽन्तरे तु कृते भयं स्यात् तदवैति दुःखम् ॥ १५८ ॥
सुखेन भोग्येन सुखोऽयमात्मा न संभवेदेकमयः कचिच्च त् ।
विशेषदोषादुदरेऽन्तरे तु कृते न तस्मिन् रमते स दुःखी ॥ १५९ ॥
बहिष्कृतस्त्वेष पुनः प्रदेशे यत्रैव गच्छेन्न रमेत सद्यः ।
अथ क्रमाद् भोग्यकुले स आत्मा ममत्वयोगाद्धिभवन् रमेत् ॥ १६० ॥
न केवलं तत्सुखमात्मनीनं तस्याविशेषादसुखाप्रसङ्गात् ।
आत्मेव तस्मादिह भोग्यवर्गोऽप्यानन्द एवेति मतः स भूमा ॥ १६१ ॥

## ५ आत्मभिन्नानामानन्दमयत्वे पूर्वोत्तरपक्षौ ।

अथाहुरानन्दमयोऽयमात्मैवान्येतु भोग्या न तथा ;स्युरेते ।
आत्मीयमानन्दमयांशुमेवाभिव्याप्तमीक्षे मम तु प्रियेऽर्थे ॥ १६२ ॥
विद्वेष्टि योऽस्मानथ यं वयं वा द्विष्मो न नस्तत्र तथांशुरेति ।
न स प्रियस्तेन, सदोषदृष्ट्या दृष्टः प्रदुष्टः प्रतिभाति दृग्वत् ॥ १६३ ॥
मूर्छां प्रयन्नेष मुमूर्षुरात्मा पश्यन्निरानन्दमुपैति सर्वम् ।
तस्मान्निजानन्दमयांशुयोगादेव स्युरानन्दमयाः परेऽर्थाः ॥ १६४ ॥
अत्रोच्यते यद्वदयं द्विषन्तोऽप्यानन्दपूर्णोऽहमिवास्ति किन्तु ।
नानन्दमात्रास्य विभाति तद्वद् भोग्योऽर्थ आनन्दमयो न भाति ॥ १६५ ॥
जीवा यथानन्दमया अशेषास्तथैव भोग्या अपि सर्व एते ।
प्रियस्तु सर्वोपि स दृष्टिदृश्यानन्दद्वियोगेन तदेकतायाम् ॥ १६६ ॥

कामोऽयमात्मांशुरनेन कामेनात्मा परस्मिन्नुपसृप्य भक्त्या।
आसज्यते तेन च स प्रियः स्यान्नास्य प्रियः कोपि सचेदकामः ॥ १६७ ॥
कामानपेक्षस्त्वथवायमात्मैवानन्द आनन्दमयाखिलार्थैः।
एकीभवन् पश्यति विश्वमेवानन्दं स आत्मास्ति विदेहमुक्तः ॥ १६८ ॥

## ६ आत्मन्यज्ञानावरणाद् दुःखोपपत्तिः।

यदोषधीरत्ति जलं च तेजो वायुं च वाचं श्रमतो बलं च।
ज्ञानं च पञ्चेन्द्रियसंप्रयोगात् प्राप्नोति शिक्षावशतश्च किञ्चित् ॥ १६९ ॥
एषां सुयोगात् सुखमल्पमिथ्यातियोगतो दुःखमुदेत्यनल्पात्।
अथास्ति सप्तस्वशितेषु तेषु प्रसादकिट्टद्विविभागसिद्धिः ॥ १७० ॥
प्रत्यर्थमेवास्त्यमृतं च मृत्युर्मृत्युर्बहिर्धाऽन्तरतोऽमृतं च।
किट्टं तु मृत्योरमृतात् प्रसादः स्वभावतः स्याद् द्विविभागसिद्धिः ॥ १७१ ॥
रसः प्रसादस्तत आत्मनो यद् विस्रस्यते तत् परिपूर्तिमेति।
किट्टं मलं नात्महितं तदात्माऽनुत्सृज्य यद् यौति तदस्य दुःखम् ॥ १७२ ॥
पुरीषमूत्राद्युपसर्गबाधे त्यक्तुं हठादिच्छति सद्य आत्मा।
नोत्सृज्यते यावदिदं स तावत् प्रपीड्यते योगत एति रोगम् ॥ १७३ ॥
कर्म प्रसादः सुखकृद् विकर्मा कर्मद्वयं दुःखकृते तु किट्टम् ॥
ज्ञानं प्रसादः सुखकृन्मलात् त्वज्ञानान्यथाज्ञानत एति दुःखम् ॥ १७४ ॥
सप्तान्नभोगेऽपि सुयोगहेतुर्ज्ञानं तथा ज्ञानकृतं च कर्म ॥
प्रज्ञापराधात् त्वतिहीनमिथ्यायोगा विकर्म्माणि ततोऽस्य दुःखम् ॥ १७५ ॥
तथा च सर्वत्र सुखोदयेऽस्ति ज्ञानं निमित्तं न विना ततस्तत् ॥
अज्ञानतः सर्वविधानि दुःखान्युद्यन्त्यतो भीर्भवतीति सिद्धम् ॥ १७६ ॥

## ७ अन्नसुयोगाभावाद् दुःखोपपत्तिः ॥

यदन्नमात्माऽऽयतनेऽशनायया संगृह्यते तत्रसुयोगतः सुखम् ॥
अयोगहीनातिविरुद्धयोगतः प्रज्ञापराधात् त्विह दुःखमुद्भवेत् ॥ १७७ ॥
अन्नं जलं तेज इदं स वायुर्वाग् वा बलं ज्ञानमजस्रमत्र ॥
प्रयुज्यते तेष्वतिहीनयोगाद् विरुद्धयोगाच्च भयं च रोगः ॥ १७८ ॥
तेजो रवेर्वायुमथान्तरिक्षाद् वाचंश्च ताश्च स्वत एव भुङ्क्ते ॥
बलं तु कर्मेन्द्रियतः श्रमाच्च ज्ञानं प्रगृह्णाति च धीन्द्रियेण ॥ १७९ ॥
सर्वत्र हीनातिविरुद्धयोगादनिष्टमुत्पद्यत इत्यवैमि ॥
अन्नग्रहे चात्मविसर्जनेवा प्रज्ञापराधो भयहेतवे स्यात् ॥ १८० ॥
मनः प्रभृत्यात्मनि मृत्तिकान्तं यदस्ति तत्संयुतमन्यदन्नम् ॥
विरुध्यते चेत् तदनिष्टकृत् स्यात् रुग्भीतिकृद्ध्यात्मविरुद्धमेतत् ॥ १८१ ॥
वागर्थमश्नाति बलं भुनक्ति प्राणो मनो ज्ञानमलं भुनक्ति ॥
विरुद्धविज्ञानमवाप्य सद्यः क्षुभ्णाति विद्वेष्टि बिभेति हान्त ॥ १८२ ॥

यथाल्पसारः प्रबलाक्रमेण प्रपीड्यते तद्वहादिहाल्पचेताः ॥
विरुद्धविज्ञानमवाप्य सद्यो धैर्य्यच्युतः स्यान्न तथा विपश्चित् ॥ १८३ ॥
सप्तस्वपि व्याहृतिषु प्रसन्नाप्रसन्नभेदाद् बहवो विशेषाः ॥
कांश्चिद्विरुन्धन्ति च केचिदेषां मेघन्ति केपीति पृथक प्रविद्यात् ॥ १८४ ॥

## ८ आत्मनि कामासक्त्या दुःखोपपत्तिः ।

आत्माह्ययं काममयोऽस्ति यस्मान्निवर्त्तते स्वत्वममुष्य कामात् ॥
आत्मांशकामव्यपघातहेतोरात्मा विहन्येत तदस्य दुःखम् ॥ १८५ ॥
अथाहुरेतन्मतमस्ति रिक्तं यत्कामहान्याह तदात्महानिम् ।
आत्मा हि गृह्णाति जहाति कामं कुतो विहीयेत स कामहान्या ॥ १८६ ॥
अत्रोच्यते कामसमर्पितः स्यादासक्त्यनासक्तिवशाद् द्विधायम् ।
कामप्रसक्तस्य सकाम आत्मा कामानुगः काममयस्वरूपः ॥ १८७ ॥
कामात्मनः काममयस्य चात्मा कामेषु तेष्वेव विभक्त आस्ते ।
कामोऽस्य यावानुपहन्यतेऽयं तावांस्तदात्माऽप्युपहन्यतेऽस्य ॥ १८८ ॥
अथापि वा तस्य विभूतिरस्मिन् कामोऽस्ति कामे विहते हता सा ।
आत्मोदरेऽभूदिदमन्तरं यत् कामस्य हान्या तदवैति दुःखम् ॥ १८९ ॥
अप्राप्तकामं यदि कामयेत तत्रापि कामावपनार्थमात्मा ।
संवर्द्धते तत्र न यावदेति कामं स तावत् समुपैति दुःखम् ॥ १९० ॥

## ९ दुःखस्य भयपूर्वकत्वनियमः ।

भयं न दुःखेन भयेन दुःखं समन्वितं रूपमुदेति तस्मात् ।
दुःखं न चेन्नास्ति भयं भयं वा न चेन्न दुःखं समुदेति तत्र ॥ १९१ ॥
अथाहुरेतन्मतमस्ति रिक्तं दुःखं न चोदेति भयं विनेति ।
आकस्मिकाघातवशात् स्वहानौ मृतौ च दुःखं क्रमते न भीतिः ॥ १९२ ॥
अत्रोच्यते नास्ति भयादृते तद्दुःखं न कम्पेन विनावसादः ।
स्यादात्मनोऽथास्ति न कामहानौ चेदात्मकम्पो न तदास्ति दुःखम् ॥ १९३ ॥
किन्त्वात्मनः सप्तपरिग्रहस्थे कम्पे भयस्यानुभवो धियास्ति ।
प्रकम्पिते त्वात्मनि न प्रसादो दृष्टुस्ततो नानुभवो भयस्य ॥ १९४ ॥
तत्कालमृत्यौ तु भयं क्षणेन स्थानेषु सप्तस्वपि सर्प्यमाणम् ।
गृह्येत नात्यन्तिकवेगहेतोर्न गृह्यते दुःखमपीह तद्वत् ॥ १९५ ॥
अथास्तु वा दुःखमिदं समस्तं भयस्वरूपं पृथगात्मकं वा ।
यथा तथा वास्तु तथापि कामासक्त्यात्मनो दुःखमिदं भयं च ॥ १९६ ॥

## १० प्रज्ञाशरीरोपष्टम्भभेदाद् दुःखद्वैविध्यम् ।

द्वेधा च तद्दुःखमिह प्रवर्तते प्रज्ञामुपक्रम्य शरीरमेति वा ।
भूतान्युपक्रम्य धियं समेतिवा रुजैव तत्रास्ति भयं न दृश्यते ॥ १९७ ॥

## ११ अनासक्तौ स्थितप्रज्ञता।

कामेष्वनासक्तिमितो य आत्मा न कामघातादयमेति घातम्।
नायं विचाल्येत विचालहेतोरभावतः संस्थितधीरिहोक्तिः॥ १९८॥
आत्मा स्थिरो यस्य न तस्य दुःखं स्थिरो विचालीति विरुद्धमेतत्।
ततः स्थितप्रज्ञ इह स्ववित्तादिकामहान्यापि न दुःखमेति॥ १९९॥

## १२ अज्ञानमूलासक्तिः, ज्ञानमूलाऽनासक्तिः।

आसक्तिरज्ञानवशात्तु तस्मिन् प्रवर्तते ज्ञानवशात् त्वसक्तिः।
अज्ञानमेवास्ति भयस्य हेतुर्विज्ञानमेव त्वभयं वदामः॥ २००॥
कामानुषक्तो हि बलाधिकं यत् पश्यत्यकस्मादगृहीतपूर्वम्।
बिभेति तस्माच्चकितोऽपसर्पत्यसौ पुनः शान्तिमुपैति बुद्ध्वा॥ २०१॥
अन्तः प्रवेशे नियमं न वेत्ति यो बिभेति धीमान् प्रविशन्नपालये।
अज्ञातदेशे प्रविशन् बिभेत्यसौ दुर्गेऽपि निःशङ्कमुपैति शिक्षितः॥ २०२॥
भयं ततोऽज्ञानवशात् प्रजायते भयस्य मात्रा तदबोधमात्रया।
प्रशान्तिमात्रापि च बोधमात्रया सर्वत्र दृश्येत विवेकशालिनाम्॥ २०३॥
प्रज्ञा भयेऽस्मिन् विचलत्यवश्यं शान्तौ पुनः सा स्थिरतामुपैति।
प्रज्ञा यदुत्सीदति चात्मनः सा भयस्य काष्ठा म्रियते तदासौ॥ २०४॥

## १३ भयस्य मरणान्ता अष्टौ भेदाः।

यदा ह्यधिप्रज्ञमुदेति कम्पनं तस्या विभूतिर्विषयेभ्य उत्क्रमेत्।
नाभौ प्रकम्पात्तमसा प्रसङ्गतः स्युः प्राणवागादिषु विक्रियाः क्रमात्॥ २०५॥
प्राणः सकम्पो भवतीति दुर्बलोऽप्यसौ भयोद्भूतबलात् पलायते।
वाग् वा सकम्पा भवतीति बिभ्यतो मुखादकस्माद् भयवागुदीर्यते॥ २०६॥
वायुः सकम्पो भवतीति कम्पनं गात्रेऽधिकं श्वास उदेति भूयसा।
तेजः सकम्पं भवतीति शोषणं मुखेऽनुतप्तश्वसनोष्णवर्ष्मणा॥ २०७॥
जलं सकम्पं भवतीति विग्रहः प्रस्वेदपूर्णः सहसाभिजायते।
मृद्धा सकम्पा भवतीति गौरवात् स्तब्धाऽसृगुत्सन्नगतिश्च मूर्छितः॥ २०८॥
इत्थं चिरायात्र भयोपसर्पणे चिरं विकारक्रमतोऽति दुर्बला।
निर्मूलमुत्सन्नतरा यदात्मनः प्रज्ञा भवेत् तर्ह्यचिरान्म्रियेत सः॥ २०९॥
प्रज्ञाल्पमात्राल्पबला श्लथास्य चेदाभासते तत्र चिदल्पवत् ततः॥
प्रज्ञाल्पमात्रा विधृतप्रतिष्ठिता विचाल्यते ज्ञानबलप्रणोदिता॥ २१०॥
विचाल्यमाने जलवन्न भाति चेत् प्रज्ञे चिदात्मा मरणं तदुच्यते॥
प्रज्ञां नितान्तप्रचलान्तरामनु स्युर्नो चिदाभास विभूतयस्तदा॥ २११॥
अज्ञानतोऽल्पे तु भये प्रवर्तिते प्रज्ञानकम्पादुदियन्ति विक्रियाः॥
सा प्राप्य विज्ञानमिह प्रतिष्ठिता तेनैव चालं विधृता प्रसीदति॥ २१२॥

## १४ भयमज्ञानमूलकं ज्ञानमूलकं वेति विचारः।

अथाहुरेतन्मतमस्ति रिक्तं भयं यदज्ञानकृतं वदन्ति ॥
पश्यामि तु ज्ञानकृतं भयं स्यादज्ञानतो निर्भयतामुपेयात् ॥ २१३ ॥
वटेऽत्र यक्षो वसतीति जानन् बिभेति भूयो वटमागतस्तम् ॥
अजानता निर्भयमत्र रात्रौ सुस्थीयते नापि दिवात्र भीतिः ॥ २१४ ॥
राज्ञो गृहे सर्वजनः प्रवेशं नार्हत्यथो साहसिकः प्रविश्य ॥
दण्डेन निस्ताडनमर्हतीति जानन् प्रवेशाय बिभेति भूयः ॥ २१५ ॥
यो बालिशो दीनजनस्य भूपतेर्नेहान्तरं वेत्ति न वा नृपालये ॥
वेत्ति प्रवेशे नियमं स निर्भयं स्वैरं प्रवेशाय मतिं करोतिहि ॥ २१६ ॥
तस्माद्भयं ज्ञानत एव संभवत्यज्ञानमास्ते शरणं जडात्मनः ॥
ज्ञानाद्भयं चेत्कथमुच्यतेऽमृतं विज्ञानमानन्दमयं किलाभयम् ॥ २१७ ॥

## १५ अज्ञानावृतज्ञानाद्भयमिति सिद्धान्तः।

अत्राहुरज्ञानकृतं न तद्भयं न त्वेव विज्ञानकृतं क्वचिद्भयम् ॥
ज्ञानं यदज्ञानकृतं तदागमान्मुह्यन्ति सर्वे भयहेतुरस्ति तत् ॥ २१८ ॥
विज्ञानमात्मा हि यथास्ति यस्य तत्तथैव तिष्ठत्यपहन्यते न तत् ॥
अज्ञानकाले ऽपि तदप्रणोदितं कथं विचाल्येत कुतो भयं भवेत् ॥ २१९ ॥
विज्ञानमात्मा हि यथास्ति यस्य तद्विज्ञानमन्यत् परिगृह्य वर्द्धते ॥
तदात्मवृद्ध्या रसमश्नुते तथाऽनन्दः स तस्मान्न भयं तदा भवेत् ॥ २२० ॥
ज्ञानं यदज्ञानत आवृतं भवेत् तदागमादिन्द्रियमार्गतः क्रमात् ।
प्रज्ञा श्लथाज्ञाल्पबला प्रतिष्ठया च्यवेत चाज्ञानबलावृताऽऽहता ॥ २२१ ॥

## १६ प्रज्ञानबलानुसाराद्भयतारतम्यम्।

द्वैधं हि मात्रा कृतबन्धने भवेत् क्व च श्लथत्वं दृढताथवाक्वचित् ।
वज्रेऽस्ति बन्धोऽति दृढोऽथ तूलके श्लथः स एवं निखिलेषु कल्प्यताम् ॥२२१॥
श्लथः स बन्धो विपुलोपि दुर्बलो दृढस्तु कार्श्येऽपि बली घनास्थिवत् ।
बलाधिकश्चे च्छ्लथबन्धनोऽप्ययं काले ध्रुवं स्याद् दृढबन्धनक्रमात् ॥ २२२ ॥
प्रज्ञस्य बन्धोऽपि शिशोः श्लथः पुरा तता बिभेत्यल्पविभीषयाऽप्यसौ ।
यदा तु विज्ञानमुपार्जते क्रमात् सहैव तेनात्र विधीयते बलम् ॥ २२३ ॥
यथा यथा ज्ञानवशाद् बलोदयः प्रज्ञस्य बन्धोऽपि बलैर्दृढीभवेत् ।
यावत्तु बन्धे दृढता ततः क्रमात् प्रज्ञो विचाल्येत न वा बिभीषया ॥ २२४ ॥

## १७ विज्ञानयोगमूलकप्रज्ञानप्रतिष्ठातारतम्याद्भयतारतम्यम्।

विज्ञान सङ्गेन बलं यदागतं प्रज्ञं तदा योजयति प्रतिष्ठया ।
अज्ञान सङ्गेन बलं यदागतं प्रज्ञप्रतिष्ठा च्यवते ततः क्रमात् ॥ २२५ ॥

तदेतदज्ञानकृतो भयोदयोऽनन्तो मतो ज्ञानकृतः शमक्रमः ॥
विज्ञानतः प्रज्ञधृतौ बलोदयान्नोद्वेगशोकाकुलतार्ति संभवः ॥२२६ ॥

## १८ प्रज्ञानप्रतियोगिकविज्ञानसंबन्धात् प्रज्ञानबन्धनबलदार्ढ्यम् । प्रज्ञानानुयोगिकविज्ञानसंबन्धात् प्रज्ञानबन्धनमुक्तिः ।

विज्ञानतो बन्धनमुक्तिरिष्यते न बन्धनं क्वापि तथापि संप्रति ।
प्रज्ञस्य विज्ञानवशेन बन्धनं यदुच्यते तन्न च नोपपद्यते ॥ २२७ ॥
विकाशि विज्ञानमिदं विकाशनस्वभावतो बन्धनमोचनं भवेत् ।
तच्चानुगृह्णाति विशिष्य कर्म्म यत् तदेव विस्फोटयतीति निश्चितम् ॥ २२८ ॥
प्रतिग्रहेणैतदनुग्रहेण प्रवर्ततेऽनुग्रहतस्तमोनुत् ।
प्रतिग्रहादस्य तु मर्त्यकार्य्यानुयोगयोग्यामलरूपसिद्धिः ॥ २२९ ॥
प्रज्ञस्य विज्ञानमिदं पराङ्मुखं कामान् पराचो हि सदाऽवभासयेत् ।
प्रज्ञे परावर्तितमानखादिदं गच्छेत् तदात्मज्ञतया स मुच्यते ॥ २३० ॥

## १९ निरन्नविज्ञानवर्धनात् प्रज्ञानबन्धनमुक्त्या दुःखाभावः ॥

विज्ञानमाकाशममुष्य वर्द्धनादन्नादमन्नं च विसारि जायते ।
विवृद्धमाकाशमनुप्रसारणादन्नस्य बन्धः क्रमशो विहीयते ॥ २३१ ॥
सहैव चान्नेन यदा तु वर्द्धते विज्ञानमस्मिन् न तदान्नबन्धनम् ।
विशीर्य्यतेऽन्नस्य च न प्रसारणं तद्बन्धमुक्त्यै तु निरन्नवर्द्धितम् ॥ २३२ ॥
सहैव चान्नेन यदा तु वर्द्धते विज्ञानमेतद्विधृतान्नसंचयः ।
प्रज्ञस्य संवर्द्धयते धृतिं क्रमाद् धृतेश्च मात्रामनु तद्व्ययक्षयः ॥ २३३ ॥
तथा च विज्ञान मिदं हि बाह्यानर्थान्दधत् प्रज्ञसमर्थताकृत् ।
अन्तर्मुखं प्रज्ञगतं तु मुक्त्यै तमस्तदुत्साद्य रसं तनोति ॥ २३४ ॥

## ॥ इति तृतीयः खण्डः ॥



# अथ उपासनाखण्डः ।

## १ श्रद्धानमयानुध्यानमुपासना ।

आतिष्ठते चेदिदमस्ति सत्यं सत्यत्वविश्वास इति स्म श्रद्धा ।
श्रद्धाय तल्लग्नमना यदानुध्यायत्यमुं प्राहुरुपासनां ताम् ॥ २३५ ॥
सत्यत्वविश्वासमये परानुध्याने रसं यल्लभते ततोऽसौ ।
उपासिताराधयते विशेषात् तं सच्चिदानन्दमुपासनातः ॥ २३६ ॥

## २ सत्यवती उपासना ।

सा च त्रिधा तत्र हि तस्य दृष्ट्याऽस्त्युपासना सत्यवती विशिष्टा ।
तथा ह्यणुः कश्चन यो महान् वा तं सच्चिदानन्द इति ह्युपास्ते ॥ २३७ ॥

## ३ अङ्गवती उपासना ।

एकैकमङ्गं प्रतिपद्यते चेदङ्गीत्यकृत्स्ने यदि कृत्स्नबुद्धिः ।
अपूर्णभावे यदि पूर्णबुद्धिः सोपासना त्वङ्गवती द्वितीया ॥ २३८ ॥
आशीर्षमापादतलं विभुर्यो वैश्वानरः सोऽस्ति षडङ्ग आत्मा ।
एकैकमङ्गं प्रतिपद्यते चेद् वैश्वानरं साङ्गवती ह्युपास्तिः ॥ २३९ ॥
प्राणं हि कश्चिन्मन एव कश्चिद् वाचं हि कश्चिद् हृदयं च कश्चित् ।
ब्रह्मेत्युपास्ते क्वचिदन्यदन्यच्चेत्यूचिरे तूपनिषत्स्वभिज्ञाः ॥ २४० ॥
उपासना याङ्गवती प्रतीकादुपासना या च पृथक् पृथक् सा ।
प्रतीकतोऽङ्गं पृथगीहमानस्योत्तिष्ठते तद् घटिताङ्गिबुद्धिः ॥ २४१ ॥

## ४ अन्यवती उपासना ।

तद्वस्तु वस्त्वन्तररूपतो यदा पश्यत्यसावन्यवती ह्युपासना ।
यज्ञात्मनायं पुरुषोऽथ पूरुषात्मनापि यज्ञः प्रतिपद्यते क्वचित् ॥ २४२ ॥
रवौ यजुः पूरुष इत्युपासते भुव्यातपे त्वश्व इति ह्युपासते ।
वायोः परावर्तितरश्मिगं यजुस्तूपास्यते गौरिति भूमिधारकः ॥ २४३ ॥
यदन्धकारावृतविश्वचक्रं यदन्तरे भाति हिरण्मयोऽर्कः ।
हिरण्यगर्भः प्रभुरेष शालग्रामाश्मनि स्वेन समेऽस्त्युपास्यः ॥ २४४ ॥

## ५ अङ्गवत्यन्यव॰ गेरुपासनयोः सामथ्यम् ।

योपासनेहाङ्गवती न सा स्यादनर्थिका यावदिहास्ति सत्यम् ।
तावद्बलं नूनमयं लभेतामुष्मिन्निहापि प्रतरां प्रयोगात् ॥ २४५ ॥
कात्स्न्यात् समुद्रं न विगाह्य तीरादादाय तोयान्यभिमन्यतेऽयम् ।
समुद्रतस्तोयमनैषमित्थं नापैति सत्यादभिमान एषः ॥ २४६ ॥
या चान्यवत्यस्ति न साप्यपार्था तयास्ति विज्ञानविधोपकारः ।
यैनास्त्युपास्यो व्यपदिष्ट एतद्धर्म्मानुपास्यैऽपि विदन्ति साम्यात् ॥ २४७ ॥
गजाश्वधेनुप्रतिपूर्तिभिश्चेत् प्रशिक्षितः पश्यति मृन्मयीस्ताः ।
अयं गजो गौरयमश्वइत्थं न व्यर्थतामेत्यभिमान एषः ॥ २४८ ॥
अकार एषोस्ति हकार एषोऽस्त्यैवं मसीकल्पितचिह्नभेदे ।
व्युत्पादितोऽस्मिन्नभिमन्यते यन्न व्यर्थतामेत्यभिमान एषः ॥ २४९ ॥

इत्युपासनाखण्डश्चतुर्थः संपूर्णः ।

# इति कृष्णत्रिसत्योपनिषत् ।

---

# अथ पूर्णद्विसत्योपनिषत् ।

## १ तत्रादौ ब्रह्मकर्माधिकारः ।

### १ जगन्मूलैकत्वसिद्धान्तः ।

१ विकुर्वदाकारमिदं निरन्तरं तथापि नो नास्ति कदापि तेन तत् ।
ध्रुवस्य नित्यस्य हि कस्यचिद् ध्रुवं विकारभूतं जगदित्यवेयते ॥ १ ॥
विकारि सर्वं जगदस्ति सर्वे सर्वेषु रूपेषु विपर्य्ययन्ते ।
तस्मात् समस्तं जगदेककार्य्यं निश्चीयते कारणमस्य चैकम् ॥ २ ॥
यन्निर्विशेषं ध्रुवमेकरूपं तत्कारणं नाम ततो विशेषाः ।
इमे समग्राः प्रभवन्ति भूयोऽभवन भविष्यन्ति जगत्तदाहुः ॥ ३ ॥
यन्निर्विशेषं नु तदामुनाम्ना तदभ्वमन्यन्नु यतो विशेषाः ।
तदामु तु ब्रह्म, तदभ्वमेवं कर्मेति मायेति वदन्ति देवाः ॥ ४ ॥

### १ जगदन्तभावनामतम् । ( अवसितविकारकल्पः )

२ मतानि षट् तत्र भवन्ति धीमतां केचिद्विदुर्ब्रह्म यदस्ति कारणम् ।
जगत्स्वरूपाय तदल्पमस्त्रसद्भूयिष्ठमद्याप्यविकारि शिष्यते ॥ ५ ॥
यथा सरस्यम्बुघनो परिस्तरः फेनस्य दुग्धोपरि वा शरस्तरः ।
यथा च लोहोपरि किट्टसंभवस्तथेह च ब्रह्मणि विश्वसंभवः ॥ ६ ॥
कदाचिदन्ते तदशेषतो जगद्भवत् पुनर्निर्विकृतं न वत्स्यति ।
द्रवंस्तुषारो निखिलद्रवात्परे स्वरूपतो विच्यवते यथा तथा ॥ ७ ॥
यदाऽखिलं ब्रह्म जगद्भविष्यति प्रवत्स्यतीदं न जगत्तदुत्तरम् ।
न मूलमस्तीति जगत्क्रियाऽन्ततो निरोत्स्यते नोत्तरकर्म्म वेद्म्यहम् ॥ ८ ॥
पूर्णं पुरा सर्गगतं च पूर्णं पूर्णात् पुनः पूर्णमुदच्यते तत् ।
पूर्णस्य पूर्णं परिगृह्यते चेद् अन्तेऽवशिष्येत तदेव पूर्णम् ॥ ९ ॥

### २ ब्रह्म-जगच्चक्राविराममतम् । ( चक्रविकारकल्पः )

३ प्राहुः परे नेत्थमियं जगत्क्रिया समाप्यते, ब्रह्म न नास्ति कर्हिचित् ।
प्राणज्जगत्तत् सविशेषमेकदा ब्रह्माविशेषं तदपानदेकदा ॥ १० ॥
स्याद् ब्रह्मणः कृत्स्नजगत् प्रवृत्या, स्याद् ब्रह्म पश्चाज्जगतो निवृत्या ।
पुनर्जगद् ब्रह्म पुनः पुनस्तत् प्रवर्तते चक्रमनारतं तत् ॥ ११ ॥
पूर्णं ह्यरो ब्रह्म कदाचिदासीत् ततोऽभवद् विश्वमिदं च पूर्णम् ।
तद्ब्रह्मतः पूर्णतयाऽस्य सेके जगत् पुनः सेचकरूपमेति ॥ १२ ॥

## १०—जीवखण्डनम् ।

१ जीवोऽयमात्मा न शरीरभिन्नोऽस्त्ययमूर्तमूर्तव्यतिरिक्तरूपः ।
सूक्ष्मं शरीरस्य यदस्ति रूपं स्थूलं यतोऽजायत सोऽस्ति जीवः ॥ २५ ॥
शरीरवद् विक्रियमाणरूपः साकं शरीरेण स जायते च ।
नश्यत्यनेनैव सहैष मृत्वा लोकान्तरेऽगादिति तु भ्रमोऽस्ति ॥ २६ ॥

## ११—ईश्वरखण्डनम् ।

१ आपामरादाविदुषां कुलाद्वा नाद्यापि यत्नैरपि योऽस्ति दृष्टः ।
मिथ्येश्वरं तं परिकल्प्य मूर्खाः कुर्वन्ति कर्माणि वृथा तदर्थम् ॥ २७ ॥
स सच्चिदानन्द इहेश्वरोऽस्तीत्याहुः परे तन्मतमस्ति मिथ्या ।
न तावदानन्दमयस्तथा सत्यकाम इत्येष जगन्न कुर्य्यात् ॥ २८ ॥
यत्त्वब्रुवन् लोकवदत्र लीला कैवल्यमित्यस्ति विडम्बनैषा ।
प्रतारणा वा न स ईश्वरोऽसौ संभाव्यते प्राकृतलोकसाम्यात् ॥ २९ ॥
लोके च लीला द्विविधा विनोदे हेतुः पयस्ताडनवद् वृथा वा ।
व्यनक्ति तु प्रागिह दौर्मनस्यं, वैकल्पनिस्तारविधिर्विनोदः ॥ ३० ॥
यदा जगत्कर्तुरमुष्य तस्माज्जगद्विधानान्मनसः प्रसादः ।
सुखोदयो व भ्रुवमस्य तर्हि प्रतीयते प्रागिह दुःखयोगः ॥ ३१ ॥
अथो वृथा-कर्म तु पापमस्तीश्वरो वृथा तन्न कदापि कुर्यात् ।
एतद्द्वयं तु व्यतिरिच्य लोके लीला न काचित् तदयं मृषार्थः ॥ ३२ ॥
विज्ञानरूपः परमेश्वरोसावित्याहुरेके तदसत् प्रतीमः ।
विज्ञानमेवेश्वर इष्यते वा विज्ञानवानीश्वर इष्यते वा ॥ ३३ ॥
ज्ञानं यदीशः स जडस्तदानीमापद्यते ज्ञानमिदं क्व तिष्ठेत् ।
विज्ञानवानीश्वर इष्यते चेद्विज्ञानभिन्नोऽस्त्यपि कश्चिदर्थः ॥ ३४ ॥
प्रमाणतो ज्ञानमुदेति सर्वं तज्ज्ञान मासीदिति किं प्रमाणम् ।
ज्ञानं क्वचिन्निर्विषयं न दृष्टं प्राक् सृष्टितः को विषयोऽस्य बोध्यः ॥ ३५ ॥
शश्वज्जगज्ज्ञानगतं विधातुस्तत्कर्मणा सृज्यत इत्यलीकम् ।
यतोऽक्रियं ज्ञानमतः कथं वा ज्ञानादिमे स्युर्विषयाः प्रसृष्टाः ॥ ३६ ॥
स ईश्वरो नित्य उतैष जन्मवान् स जायते चेज्जगदेष नेश्वरः ।
यतोऽन्यतोऽसावुदितः स ईश्वरोऽथानीश्वरो नित्य उतास्त्यनित्यवत् ॥ ३७ ॥
आकस्मिकश्चेज्जगदप्यकस्मात् संभाव्यते व्यर्थ इहेश्वरोऽयम् ।
अनित्यतायां पुनरेवमेवाशङ्का प्रवर्तेत ततोऽनवस्था ॥ ३८ ॥
नित्योऽस्ति चेन्नित्य जगत् सृजत्ययं यद्वा कदाचित् सृजतीत्यपूर्ववत् ।
नित्यस्य कामः प्रतिपत्तिरीहितं नित्यान्यनित्यान्यथवा मनुष्यवत् ॥ ३९ ॥
नित्या यदि ज्ञानविधानकामना नित्यं तदेदं तु जगत् प्रसृज्यते ।
न प्रागभावो जगतस्तदास्य सा व्याहन्यते सृष्टिविधौ विधातृता ॥ ४० ॥

अथो कदाचित् सृजतीति मन्यसे तत् प्रागभावं च कदापि पश्यसि ।
किन्तु प्रमाणं हि न तत्र दृश्यते तत् कल्पनामात्रमसारमुच्यते ॥ ४१ ॥
अनित्यकामस्य तु कामना कश्चित् प्रजायते सृष्टिकृते मतं यदि ।
उद्देश्यमेतस्य किमस्ति सृष्ट्यै कस्मादकामस्य स काम उद्गतः ॥ ४२ ॥
मनोविनोदार्थमिदं तदा पुरा संभाव्यते ग्लानिरमुष्य मानसे ।
सृष्ट्युत्तरं प्रीतिरिहास्ति तस्य चेदग्रेऽल्प आनन्द इति प्रसज्यते ॥ ४३ ॥
निरर्थकं चेत् कुरुते तदात्वसावकर्मकृत् पापकृदेव संभवेत् ।
अनिच्छतस्तस्य जगत् स्वतो यदि प्रवर्तते तर्हि वृथैव स स्मृतः ॥ ४४ ॥
निर्माणकर्ता नु स सृष्टिकर्ता स्रष्टा स चेत्तर्हि भवेद्विकारी ।
निर्मापको द्रव्यगुणाद्यपेक्षी प्रसज्जते तत् परतन्त्र एषः ॥ ४५ ॥
स किंशरीरः किमुपाय एष वा कुत्र स्थितः कुत्र कदा विनिर्ममे ।
किमस्त्युपादानमथास्य चेष्टितं किं सृष्टितः प्रागुपपद्यते न तत् ॥ ४६ ॥
स व्यापकः स्वीक्रियते मितोवा मितस्तु विश्वेन समोस्त्यनीशः ।
स व्यापकश्चेत् जगदेतदास्ते कुत्रावकाशेऽनवकाशतायाम् ॥ ४७ ॥
तदित्थमत्राऽनुपपत्तयः स्युर्बह्वोऽपि विश्वेश्वरकल्पनायाम् ।
स्वीकुर्वतो वाऽनुपपन्नमथकथात्रितण्डा परिहार्य्यशून्या ॥ ४८ ॥
तस्माद् वृथैवेश्वरकल्पनेयं मन्यामहे शाश्वतिकं जगत् तत् ।
अवान्तरानेकविकल्पकृत्स्तं स्वभावतः शश्वदिदं स्वतोऽस्ति ॥ ४९ ॥
सत्ता तु येऽयं जगतः स ईश्वरस्तत् सत्तया सज्जगदस्ति न स्वतः ।
इत्थं विदुः केचन सा विडम्बना स्वसत्तया सन्न कुतस्तदिष्यते ॥ ५० ॥

## १२—उपास्यदेवताखण्डनम्

१ स्वीकुर्वते केचिदनेकदेवान् विलक्षणान् विग्रहिणोऽप्यदृश्यान् ।
स्त्रीपुत्रमित्रादिसमाजबन्धं पापं च पुण्यं च वदन्ति तेषाम् ॥ ५१ ॥
अथापि तानीश्वरवद्ध्युपासते तान् मन्वते स्वाभिमतार्थसाधकान् ।
न सन्ति ते विग्रहिणोऽत्र वस्तुतः प्रमाणशून्यास्तदुपासना वृथा ॥ ५२ ॥

## १३—सर्वसिद्धान्तखण्डनम् ।

१ विज्ञाननिर्मन्थनजातरूपं सिद्धान्तमाहोपनिषत्पदेन ।
अधर्म्मधर्माखिलकर्ममार्गे स्थित्यस्थिती सोपनिषत् प्रयुङ्क्ते ॥ ५३ ॥
किन्त्वस्ति सन्दिग्धमिदं समस्तं नैकोऽपि सिद्धान्त इहोपपन्नः ।
तस्माद् यथेच्छाचरणं विधत्तां मिथ्यायमाचारविचारबन्धः ॥ ५४ ॥
यदेव यत्रैव यथैव भासते तदेव तत्रैव तथैव मन्यताम् ।
यद्रोचते ते न भयं च यत्र ते तत्कर्म कुर्याः सुखमास्स्व मा शुचः ॥ ५५ ॥

# १४–असमाधेयप्रश्नावली।

१ सहस्रशो लक्षश एव कोटिशः शङ्काः प्रवर्तन्त इहार्थतोऽर्थतः।
विज्ञानशालासु न तत्समाधये वैज्ञानिकाः केऽपि कदापि वा क्षमाः॥ ५६॥
उद्यन्ति दन्ता नहि जन्मकाले क्षरन्ति भूत्वा पुनरुद्भवन्ति।
विशीर्यमाणा न पुनर्भवन्ति प्रायेण विज्ञानमिह क्वथं स्यात्॥ ५७॥
अग्रेऽधरा एव भवन्ति दन्ता अथोत्तरा अप्यधरेऽनुभूताः।
दन्ताः प्रथीयांस इवोत्तरे स्युर्दंष्ट्राः प्रवृद्धा नु समा नु जम्भ्याः॥ ५८॥
प्रजाः प्रजायन्त इमा हि लोमशाः किन्तूपपद्यानि भवन्ति चोत्तरम्।
श्मश्रूणि दुर्वारिणकानि वा नृणां स्त्रीणां तु न श्मश्रुसमुद्भवः कुतः॥ ५९॥
शीर्षे व चाग्रे पलितो भवत्ययं सोऽन्त्यैथ सर्वः पलितो वयस्यपि।
मध्ये वयस्येव निषिक्तमुद्भवेद्रेतः शिशोर्वा स्थविरस्य वा किम्॥ ६०॥
स्वैदायनः शौनक एवमेवं पप्रच्छ तूद्दालकमारुणिं प्राक्।
ब्रह्माप्ययं कुण्ठित एव तस्थौ प्रत्युत्तरे न क्षमते स्म तेषाम्॥ ६१॥
(शत० ११।२।७)
प्रवर्द्धमानोपि नरः कुतोऽष्टप्रादेशतो नोर्ध्वमुपैति वृद्धिम्।
कुतः शिरोजाः पुरतोऽवरक्ताः कृष्णाः सितास्तत्परतस्तु पीताः॥ ६२॥
प्राणद्वयं वृक्षगतं मनुष्ये प्राणत्रयं वृक्षनिधाश्च तस्मिन्।
वृक्णा द्रुमाः पल्लविताः पुनः स्युर्वृक्णो नरो जीवति नेति कस्मात्॥ ६३॥

'यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा।
तस्य पर्णानि लोमानि त्वगस्योत्पाटिका बहिः॥ ६४॥
त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः।
तस्मात्तदा तुन्नात् प्रैति रसो वृक्षादि वाहतात्॥ ६ ॥
मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरम्।
अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमाकृता॥ ६६॥
यद् वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः।
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति॥ ६७॥
रेतस इति मा वोचत जीवतस्तत् प्रजायते।
जात एव न जायते को न्वेनं जनयेत् पुनः॥ ६८॥
धाना रुह इवै वृक्षोऽन्यतः प्रेत्यसंभवः।
यत्समूल मुद्वृहेयुर्वृक्षं न पुनरा भवेत्॥ ७०॥
यत् पर्वमूले वदरद्रुमस्य द्वे कण्टके उद्भवतः सहैव।
वक्रं तु तत्रैकमथैकमन्यत् त्ववक्रमीक्षे तदिदं कुतोऽभूत्॥ ७०॥
या वर्तमाना अपि या भविष्या याश्चाप्यतीता जनता अनन्ताः।
तदाकृतौ तद्वचने च भूयः साम्येऽपि किं भेदकमित्यचिन्त्यम्॥ ७०॥
उच्छ्वासनिश्वासविधी शरीरे प्रतिक्षणं यौ भवतो निसर्गात्।
भूयः परीक्ष्यापि तयोर्यथावद् विदन्ति हेतुं न मनीषिणोऽपि॥ ७१॥
कुतो दिवान्धाश्च कुतो निशान्धा अहर्निशं तुल्यदृशः कुतः स्युः।
शृण्वन्ति कस्माच्च दृशैव केचिच्छिका सुषुप्तस्य कुतो न दृष्टा॥ ७२॥

ऐन्द्रं धनुर्बुद्बुदमर्धवृत्तं वीक्षे न कस्मात्परिवर्तुलं तत् ।
पार्श्वाहतामत्रजलस्य वीची संतिष्ठते नाभिमिहेत्यकस्मात् ॥ ७३ ॥
कुतो न वीक्षे हसितं खगानां कथं शिला शोणितवृष्टिरूर्ध्वात् ।
कुतो रवीन्द्वोः परिवेष एवं समस्तपृथ्व्यां न कुतः स दृश्यः ॥ ७४ ॥
काचे दृढेऽप्यप्रतिरुद्धरश्मिर्निरुध्यते क्षुद्रतिलेन कस्मात् ।
लौहे कठोरेऽप्यनिरुद्धतापोऽङ्गारेऽल्पखण्डे पि निरुद्ध्यते किम् ॥ ७५ ॥
दृढोऽपि लाहो मृदि शोष्यतेऽथाङ्गारः समास्तिष्ठति शाश्वतीः किम् ।
विनैव पक्षं पशवोपि केचिद्भ्रमन्ति खेऽन्ये तु न पक्षिणोऽपि ॥ ७६ ॥
सर्वं तदित्थं व्यभिचारि कश्चिन्न शक्यतेऽस्मिन्नियमः प्रवक्तुम् ।
सूर्यं जिघृक्षेदपि पाणिना यज्जिज्ञासते तद्वदिदं समस्तम् ॥ ७७ ॥

(१) आश्चर्यवत् पश्यति कश्चिदेन माश्चर्यवद् वदति तथैव चान्यः ।
आश्चर्यवच्चैन मन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ ७८ ॥
अचरज भरी आंखों से देखता है इसे कोई,
अचरज के तौर पर कहता है इसे कोई ॥
अचरज के भावों से सुनता है इसे कोई,
बारबार सुन कर भी न जानता है इसे कोई ॥

(२) " अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः " ॥ ७९ ॥
गहरे अँधेरे मे घुसते हैं वो, अनजान बे समझ अरु बेखबर हैं जो ।
उससे भी ज्यादा अँधेरे में वो, सब सही जानने को मुस्तैद हैं जो ॥

## १५—अज्ञानश्रेयस्त्वसूत्रम् ।

वृथा च विज्ञानकृते परिश्रमो न ज्ञानतः श्रेय इहोपलभ्यते ।
विरुद्धभाषाश्रवणे विवादिता चित्ते च कालुष्यमतीव जायते ॥ ८० ॥
ये ज्ञानिनस्ते सततं बुभुत्सया व्यग्रा भवन्तोऽपि न वेत्तुमीशते ।
अज्ञेयमर्थं तत आकुलेन्द्रियाः करस्थमन्नं च न हन्त भुञ्जते ॥ ८१ ॥
अज्ञानिनां किन्तु न चास्त्यहंकृतिर्न चित्तकालुष्यमतो न चिन्तनम् ।
सुखेन निद्रान्ति, सुखेन जाग्रति, प्रायः सुखं जीवनमस्ति तादृशाम् ॥ ८२ ॥
अज्ञानिकाः केचन सात्यमुग्रि—शाकल्य—वस्वादय एवमूचुः ।
दुरूहसृष्टिक्रमहेतुचिन्तावैमुख्यमेषां हि मतेऽस्ति पथ्यम् ॥ ८३ ॥

इति सन्दिग्धसर्वोपनिषत् ॥ ४ ॥ प्रथमं पर्व ॥ १ ॥

—:०:—

# अथ--असत्योपनिषत् ।

## १—परस्प प्रत्यवमर्दात् सर्वमतानामप्रामाण्यम् ।

१ विमर्शयन्तो जगतोऽस्य मूलं प्राज्ञा अगृह्णन् मतमन्यदन्यत् ।
एके त्रिसत्यं नु, परे द्विसत्यं, वदन्ति चान्ये बहुधैकसत्यम् ॥ १ ॥
इत्थं विदां संशयतः परस्पराघाताच्च सर्वाणि मतानि दुद्रुवुः ।
नास्ति प्रमाणं यदि तर्हि निश्चितं नास्त्येव किंचित् त्विति मन्महे वयम् ॥ २ ॥
यस्तोयमस्तीत्यविदत् प्रमाणतः स हि प्रमाणं यदि नेक्षते तदा ।
न तोयमस्तीत्यवधारयेत्, स्वतोऽसत्ता हि, सत्ता तु भवेत् प्रमाणतः ॥ ३ ॥
सामान्यतः सर्वविधप्रमाणाभावोऽस्ति चेत् संशय एव नास्ति ।
सामान्यतः सर्वमिदं स्वतोऽसत् सिद्ध्येत्,प्रमाणेन तु सद् ध्रियेत ॥ ४ ॥
तस्मात् प्रमाणव्यतिरेकतः सतो यथा तथा स्यादसतोऽप्यधारणम् ।
इत्थं कुतर्कावसरो न विद्यते, स्याद्वा तथापि त्वसदेव सिद्ध्यति ॥ ५ ॥
सन्नास्ति चेत् सर्वमसत् प्रतीयतां स प्रत्ययस्त्वस्ति स नापलप्यते ।
इत्थं कुतर्कोऽपि न युज्यते यतः स्वप्नान्तिकज्ञानवदस्य भासनात् ॥ ६ ॥
यथाग्निरत्यन्तविवृद्धसान्द्रसत्ताण दहन् तेन सहैव शाम्यति ।
तथा त्वसत्प्रत्यय एष सर्वसद् व्यपोह्य तेनैति सह व्यपोहनम् ॥ ७ ॥

## २-शास्त्राणां मतभेदादात्मस्वरूपे सिद्धान्ताप्रतिपत्तिः ।

वैशेषिकाणां द्विविधोऽयमात्मा प्राधानिका आहुरनेकधात्मा ।
शारीरकाणामयमेक आत्मा सर्वेऽप्यमी संशयिनः स्म सन्ति ॥ १ ॥
जीवेश्वरौ पश्यति तौ कणादः, प्रत्येति जीवान् कपिलो न चेशम्, ।
द्वैपायनो मन्यत ईशमेकं, नैकस्य कस्यापि स निश्चतोऽर्थः ॥ २ ॥
वेदान्त वाक्येष्वपि कश्चिदर्थो न निश्चितो लभ्यत ऐकमत्यात् ।
प्रज्ञानमात्माऽथ महानिहात्मा विज्ञानमात्मा कश्चिदव्ययात्मा ॥ ३ ॥
आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ ४ ॥ [ गीता ]

## ३—आत्मज्ञानाशक्यत्वे वेदर्षिसहानुभूतिः ।

वेदर्षिरप्याह यथाऽयमात्मा न शक्यते ज्ञातुमपि प्रयत्नात् ।
यदा ममान्तर्हृदि वागुपागाद् आत्मानमेतां प्रवदामि वाचम् ॥ १ ॥

## ४—तथा चाह भगवान् दीर्घतमा महर्षिः ।

"न विजानामि यदि वेदमस्मि निण्यः संनद्धो मनसा चरामि ।
यदा मागन् प्रथमजा ऋतस्य आदिद् वाचो अश्नुवे भागमस्याः ॥ २ ॥ [ १ । १६४ । ३७ ॥]

## ५—असङ्गत्व-ससङ्गत्वयोरात्मस्वरूपानुपपत्तिः ।

३ असङ्ग आत्माऽस्ति, ससङ्ग एव वा, [१]ससङ्गतायां तनुवच्च्यवेत सः ।
[२]न कर्मजन्योऽतिशयस्तु संभवेदसङ्गतायां गतिभुक्तिमुक्तिदः ॥ १ ॥

## ६—प्रेत्यावस्थान-लोकान्तर गमन-जन्मधारणेषु मतभेदादेक सिद्धान्ताप्रतिपत्तिः ।

[१]लोकान्तरं याति स कस्यचिन्मते स्वकर्म्म भोक्तुं नरकेऽथवा दिवि ।
[२]देहं त्यजन् पौर्विकमेष तत्क्षणाद् गृह्णाति देहं तु परं मतान्तरे ॥ १ ॥
[३]लोकान्तरे नैति स कस्य चिन्मते, न जन्म गृह्णाति पुनः स कर्हिचित् ।
गान्धर्व देहः स इहैव तिष्ठति प्रेतः सुखं दुःखमुपैति वा क्वचित् ॥ २ ॥
[४]मतान्तरे कर्हिचिदस्य कर्म्मणो विचारणां विश्वपतिः करिष्यति ।
अनुग्रहं निग्रहमस्य तर्ह्ययं विधास्यतीत्येवमनेकधा मतम् ॥ ३ ॥
एतेषु सर्वेषु मतेषु बुद्धिमत्कृतेषु कुत्रापि परीक्षणं नहि ।
शक्यं विधातुं, न च तत्र कुत्रचित् प्रमाणमस्तीतिवृथा विडम्बना ॥ ४ ॥

## ७—प्रेत्यभावान्तरानवगमादनिर्णयः ।

मृतः क्षणादेव तु जायतेऽथवा मृतः स कालेन पुनर्विजायते ।
तत्प्रेत्यभावे क्षणमेकमन्तरं सहस्रवर्षाण्यथवेति वेत्ति कः ॥ १ ॥

## ८—योनिपरिवर्तनानवगमादनिर्णयः ।

श्वाश्वः शुकत्त्वे, स शुको नृविग्रहे, नरः करित्वे, परिवर्तते न वा ।
इत्यस्ति संदेहपदं, न तस्यचित् कश्चिद्विपश्चित्कुरुते विनिश्चयम् ॥ १ ॥

## ९—सर्वत्र संशयनिस्ताराशक्यत्वम् ।

न सोस्ति नाभून्न भविष्यतीदृशो मृतो य आगत्य वदेत् परिस्थितिम् ।
पारत्रिकी, यस्य वचः प्रमाणतः स संपरायोऽत्र भवेद्विनिश्चितः ॥ १ ॥
विभीषिका मात्रमिदं यदुच्यते प्रेत्यांहसा दुःखशतानि भुञ्जते ।
पृथक् पृथिव्या न हि लोक इष्यते न स्वर्गलोको नरको न विद्यते ॥ २ ॥
[१]एकान्त दुःखं नरके न सौख्यं [२]स्वर्गः सुखायैव न तत्र दुःखम् ।
[३]सुखं च दुःखं च मनुष्य लोके—तद् विप्रलम्भाय वचोऽप्रमाणम् ॥ ३ ॥
कियद्वदामोऽलमलं परिश्रमैः परोक्षभावस्य विचारवर्त्मनि ।
सहस्रवर्षैर्बहुदेहपातनैरसंशयं ज्ञातुमिदं न शक्यते ॥ ४ ॥

## १०—प्रेत्यात्मसत्ताया नितान्तमिथ्यात्वम् ।

प्रेत्यायमात्मास्ति न वेति संशयः प्रवर्तते नैष कदापि शाम्यति ।
प्रत्यक्षमीक्षे वपुषोऽवसादनं यदीन्द्रियाणां मनसोऽस्य चात्मनः ॥ १ ॥
जिह्वां विना नो रसना, न नासिकां घ्राणो, न नेत्रेण विनाक्षि तिष्ठति ।
श्रोत्रं न कर्णेन, न चर्म्मणा त्वचा, मनो हृदाऽऽत्मा च विना न वर्ष्मणा ॥ २ ॥
जीवद्दशायां न कदापि दृश्यते विना शरीरं पृथगात्मनः स्थितिः ।
कथं प्रतीयां वपुषोऽवसादने स एष आत्मास्ति परत्र संचरन् ॥ ३ ॥
मृतः स आत्मा यदि वर्ष्मणा विना लोकान्तरे पारयतेऽभिधावितुम् ।
कुतः स न स्वं परिवारमागतोऽभिवक्ति, दत्तं न भुनक्ति वा कुतः ॥ ४ ॥

## ११—रथात्मवत् शरीरात्मनाशात् प्रेत्य संज्ञाभावः ।

रथो यथा चक्रधुरादिदारुभिः शक्तिप्रबुद्धा लभते विधारिणीम् ।
तथा शरीरं रुधिरादिधातुभिःशक्तिप्रबुद्धामुपयाति चेतनाम् ॥ १ ॥
भूतेभ्य एभ्योऽधि समुत्थिताऽथ सा विधारिणी शक्तिरपैति तान्यनु ।
रथस्य भङ्गे तु न तस्य भिन्नवत् कश्चित् स आत्मा दिवमेति युक्तये ॥ २ ॥
तथैव मन्ये वपुषोऽवसादने सा चेतना शक्तिरिहैव नश्यति ।
तान्येव भूतान्यनु न त्वितः पृथक् कश्चित् स आत्मा दिवमेति भुक्तये ॥ ३ ॥
ब्रवीति विद्वानपि याज्ञवल्क्यः स्वारण्यके निश्चितमेतमर्थम् ।
न प्रेत्य संज्ञास्ति न चायमात्मा लोकान्तरं याति शरीरनाशे ॥ ४ ॥

## १२—मरणोत्तरमात्मनोऽसत्वे वेदर्षिसहानुभूतिः ।

( १ ) "यत्रायं पुरुषो म्रियते, उदस्मात् प्राणाः क्रामन्ति-आहो नेति । नेति होवाच याज्ञवल्क्यः । अत्रैव समवनीयन्ते । स उच्छ्वयति । आध्मायति मृतःशेते ,, ( शत १४ । ६ । २
( २ ) "यथा सैन्धवघनोऽनन्तरोऽबाह्यःकृत्स्नो रसघनः एवमयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः । एतेभ्योभूतेभ्यःसमुत्थाय तान्येवनु विनश्यति न प्रेत्य
( ३ ) संज्ञास्ति ॥ + ॥ "यथा सैन्धव खिल्य उदके प्रास्त उदकमेवानु विलीयेत, न हास्योद्ग्रहणायेव स्याद् यतो यतस्त्वा ददीत-लवण मेव एवमिदं महद्भूत मनन्तमपारं विज्ञान घन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति [ शत॰ १४ । ५४ ] [ १४ । १० । १ ]

## १३—आत्मनः प्रेत्य सत्ताभावसिद्धान्तः ।

स्वार्थान्धतादोषवशादिमे जना यथेच्छमन्यान्यमतान्यकल्पयन् ।
न वस्तुतः प्रेत्य कदा चिदात्मनः स्थितिः क्व चाप्यस्ति, ततो विरम्यते ॥ १ ॥

### इति सर्वसत्योपनिषत् । द्वितीयं पर्व ॥ २ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे
संशयोच्छेदवादे संशयाधिकारो नाम
द्विपर्वा मध्यमकाण्डः समाप्तः ॥ २ ॥

# अथ संशयोच्छेदाधिकारो नामोत्तमः काण्डः प्रारभ्यते ।

## तत्रेदं विशिष्टाद्वैतविज्ञानं नाम विशिष्टत्रिसत्योपनिषत्

### प्रथमं पर्व ।

सर्वासत्यवादप्रतिवादः प्रथमखण्डः ॥ १ ॥

### १—आलोचक-परामर्शे संशयाभ्युपगमप्रतिवादः ।

एके त्रिसत्यं च, परे द्विसत्यं, तथैकसत्यं च वदन्त्यसत्यम् ।
नाना मतानि प्रसमीक्ष्य केचित् संशय्य पश्यन्ति न तेषु सत्यम् ॥ १ ॥
न संशयं प्राप्य मनोहतः स्याद् ध्रुवं परीक्ष्ये पथि संशयः स्यात् ।
संशय्य निर्णेतुमुपैतु यत्नं प्रयत्नतोऽन्विष्य लभेत रत्नम् ॥ २ ॥
नाशेषभावप्रतिपत्तिहेतोरेकान्ततोऽपेक्ष्यमिदं प्रमाणम् ।
सहस्रशः सन्ति जगत्पदार्था अतीन्द्रिया येषु न धीप्रवेशः ॥ ३ ॥
यावद् विजानात्यपि यत्र युक्तिर्यत्र प्रमाणं प्रतिभाति तावत् ।
स्वीकार्य्यमन्यत् त्विह नाभ्युपेयादिति प्रवृत्तिः खलु बालिशानाम् ॥ ४ ॥

### २—सर्वासत्याभ्युपगमप्रतिवादः ।

साधारणा दुर्बल बुद्धयो मुहुर्विरुद्धभाषाश्रवणेन विह्वलाः ।
मनोहता गूढविचारविक्लवास्त्वेकान्ततः सर्वमसत्यमूचिरे ॥ १ ॥
न त्वस्य कर्तव्य मिहास्ति किञ्चित् ज्ञातव्यमप्यस्य न किञ्चिदस्ति ।
नादेयमेतस्य न हेयमीक्षे तस्मादुपेक्षे तमसारवादम् ॥ २ ॥

### ३—त्रिसत्योपासनायाः कर्मयोगसापेक्षतयाऽव्यवस्थितत्वात् संशयाजनकत्वम् ।

नात्यन्त मूढा न च दीर्घदर्शिनो ये मध्य कक्षाव्यवहारपण्डिताः ।
तावत् त्रिसत्ये कृतबुद्धयः स्वतो भिन्नं महेशानमुपासते हि ते ॥ १ ॥
प्रवृत्तिमार्गे व्यहारनिष्ठैरुपासनीयः परमेश्वरोऽसौ ।
स्वनिर्मितं यज्ञविशेषमन्नं निवेद्य नैवेद्यमलं स इज्यः ॥ २ ॥
यज्ञेन तेनैष महीयमानस्तेषांप्रसीदेत् परमेश्वरोऽयम् ।
जीवात्मयज्ञाः परमेश्वरस्था, जीवेषु तेऽनीश्वरशक्तिदाः स्युः ॥ ३ ॥

भुङ्क्ते हि जीवोऽन्नमयं स यज्ञो देहे भवेदीश्वरतन्त्रभुक्तः ।
स ईश्वरस्तत्र तथा करोति यथाश्रुते यज्ञफलं स जीवः ॥ ४ ॥
ग्रन्थं प्रचार्य्येह सदर्थबोधं राष्ट्रं प्रतिष्ठाप्य विशिष्टसंस्थाम् ।
शिल्पं विनिर्म्माय महोपकारं यज्ञेन तेनेशमसावुपास्ते ॥ ५ ॥
अनेन चानेन च कर्म्मणाऽस्मिन् जगत्यपूर्वं युगमारभन्ते ।
तेनेश्वरो विश्ववपुर्नवीनं संस्कारमासाद्य महीयते हि ॥ ६ ॥
अनेन चानेन च कर्म्मजातेनामुष्य जीवस्य धिया स आत्मा ।
स्वार्थान्धता कल्मषदूरहानादुदारतामेति जगत्प्रतिष्ठः ॥ ७ ॥

## ४—एकसत्योपासनाया ज्ञानयोगसापेक्षतया व्यवस्थितत्वात् संशयाजनकत्वम् ।

विधाय शुद्धां धियमित्थमग्रतस्तूपासना धर्मवशात्तदुत्तरम् ।
विज्ञानमार्गे प्रविशेदलौकिके नात्राधिकारो व्यवहारमार्गिणाम् ॥ १ ॥
यत्तूच्यते सा व्यवहारमार्गे जीवेश्वरान्योन्यविभेदबुद्धिः ।
मिथ्यास्ति तस्मात्तदुपास्ति धर्मोच्छेयो न संभाव्यत इत्यसत्तत् ॥ २ ॥
मृत्कुम्भयोः कारणकार्य्ययोर्यथा तादात्म्यमीक्षे परमार्थदृष्टितः ।
तथापि लोकेऽस्ति हि भेदवासना नात्यन्तमज्ञानमिदं न पातकम् ॥ ३ ॥
स्याद्वाथ विज्ञानविचारमार्गिणामिदं मतं सर्वविधं यथार्थवत् ।
बुद्धिश्चरन्ती पथि यत् क्वचित् क्वचिद्विश्राम्यतीमानि मतानि तद्वशात् ॥ ४ ॥
सूक्ष्मादियं सृष्टिरियाय पीवतां पीवेक्ष्यते पीव्नि हि याति दृक्पुरः ।
सूक्ष्मातिसूक्ष्मं त्ववगाहते क्रमात् क्रमः स एवेह मतक्रमोऽभवत् ॥ ५ ॥
सूक्ष्मात् क्रमात् स्थूलमभूदिदं जगत् स्थूलात् क्रमात्सूक्ष्मतमं तु मृग्यते ।
परीक्ष्यते कारणमस्य मौलिकं तत्राग्रतस्तानि मतानि सत्यवत् ॥ ६ ॥
विचारकक्षापरपारगामिनो विज्ञानपाथोधितलावगाहिनः ।
अलौकिकं किञ्चिदवेक्ष्य चक्षते सत्यं तदेकं मतमस्ति निश्चितम् ॥ ७ ॥

## ५—शास्त्रत्रयमतभेदोत्पन्नसंशयस्य निरासः ।

विशेषशास्त्रे च प्रधानशास्त्रे शारीरशास्त्रे च मतप्रभेदः ।
आक्षिप्यते संशयहेतुभूतो यस्तत्र चेदं प्रवदामि किञ्चित् ॥ १ ॥
(१) निर्वक्ति भूतात्मगुणं कणादको महान्तमात्मानमपीह पश्यति ।
विशेषतो लक्ष्यमिहाधिभूतवद् गौणी प्रवृत्तिस्तु ततोऽन्यवर्त्मनि ॥ २ ॥
(२) महान्तमात्मानमलं निरूपयन् क्षेत्रज्ञमन्यं कपिलोऽनुपश्यति ।
प्रधानतो लक्ष्यमिहाधिदैवतं चाध्यात्ममप्यस्त्यविशेषतो गतिः ॥ ३ ॥
(३) क्षेत्रज्ञमात्मानमलं निरूपयन् कृष्णश्चिदात्मानमपीक्षते बहु ।
अध्यात्मलक्ष्येण सहाधिदैवतं सहाधिभूतं च समीक्षतेतराम् ॥ ४ ॥

चत्वार आत्मान इमेऽनुसंहिताः क्रमान्निरुक्ता न तु तत्र संशयः।
अनुग्रहोऽयं यदिदं पृथक् क्रमान्निरूप्यते, न क्रियते तु संकरः॥ ५॥
शास्त्रं तदेकं त्रिभिरेभिरिष्यते तस्मिंश्चतुर्णां प्रतिपत्तिरात्मनाम्।
विभिन्ननिर्म्मातृवशात् त्विमे महाखण्डाः पृथक् शास्त्रतयाऽवकल्पिताः॥ ६॥

# ६ आत्मगतौ मतभेदात् संभवतः संशयस्य निरासः।

## १—असङ्गत्व-ससङ्गत्वयोरात्मभेदेन व्यवस्था।

असङ्गतायां च ससङ्गतायां यः संशयस्तन्निकृतिं वदामः।
अनेकधाऽऽत्मान इहोपदिष्टाः केचित् ससङ्गाः कतिचित् त्वसङ्गाः॥ १॥
स निर्विशेषः, स परात्परो वा, स चाव्ययः सोऽक्षर, इत्यसङ्गाः।
क्षरस्तु कर्म्मात्मतया स सङ्गो भूतात्मनः कर्म्मगतिं वदन्ति॥ २॥
* प्रज्ञानसंज्ञोऽस्ति ससङ्ग आत्मा कर्म्मात्मता भौतिकता च तत्र।
नो चेत् कथं तत्र स कर्म्मजन्यः संस्कार उत्पद्य चिरं ध्रियेत॥ ३॥
मुखेऽम्लयोगान्नसि नस्ययोगात् कर्पूरयोगाद् दृशिवा यथाऽऽपः।
निर्य्यान्ति, दुर्ज्ञानहताच्च हृत्स्थात् प्रज्ञानतोऽश्रूणि तथा द्रवन्ति॥ ४॥
शृङ्गारे वीभत्से वीरेकरुणेऽद्भुते हास्ये।
रौद्रे भये च शान्तौ द्रवतीन्द्रियगो रसात्मना प्राज्ञः॥ ५॥
यो भाति दक्षिणेऽक्षणि विज्ञानात्मा हिरण्मयः पुरुषः।
पश्यामस्तमसङ्गं न सज्जतेऽग्नौ न चाप्सु नान्यत्र॥ ६॥

## ७—भूतात्मनः स्वर्गनरकादिलोकयात्रानिर्णयः।

यः संपराये मतभेदसंशयस्तत्रोच्यते त्वात्मविभेदनिर्णयः।
अनेकधाऽऽत्मान इहोपपादितास्तेषां विभिन्ना गतयो निरूपिताः॥ १॥
भूतात्मनः कर्म्मगतिः स नाना लोकेषु संयाति वियाति भूयः।
स्वर्गे स आनन्दमुपैतिकाले दुःखं च भोक्तुं निरयं स याति॥ २॥

## ८—मृत्यु काले देहान्तरपरिग्रहनिर्णयः।

मृतः स-भूतानुशयो बहिर्भवन् सद्यः शरीरान्तरमेति भौतिकम्।
त्यक्त्वा च तद् गर्भशरीरमश्नुते, न चाशरीरः क्वचिदेष तिष्ठति॥ १॥

---

* यत्रास्य पुरुषस्य मृतस्य—अग्निं वागप्येति वातं प्राणः, चक्षुरादित्यं, मनश्चन्द्रं, दिशः श्रोत्रं पृथ्वीं शरीरम् आकाशमात्मा, ओषधीर्लोमानि, वनस्पतीन् केशाः, अप्सु लोहितं च रेतश्च निधीयते—क्वायं तदा पुरुषो भवतीति। तौह (आर्तभाग—याज्ञवल्क्यौ) उत्क्रम्य मन्त्रयां चक्रतुः—कर्म्महैव तदूचतुः, कर्म्म हैव तत् प्रशशंसतुः॥ पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेति॥ (शत प० १४।४।७)

जीवो मुमूर्षुः करणावसादे संवेष्टितो गच्छति भूत सूक्ष्मैः ।
ताण्ड्य श्रुतौ गौतम जैवलीय प्रश्नोत्तराभ्यां प्रथितोऽयमर्थः ॥ २ ॥
मृतः स सद्यो लभते च यातना शरीरमन्यद्दिवि वायुयोगतः ।
अनेन भोगाननुपभुज्य तत्पुनस्त्यक्त्वा नवं देहमुपैति योनिजम् ॥ ३ ॥
† तमेतमर्थं भगवान् मनुः प्राक्सस्मार जीवः स यथा मृतः सन् ।
वायुस्थ भूतैरुपवेष्टमानो गान्धर्विकं भोगशरीरमेति ॥ ४ ॥

* १ योऽस्यात्मनः (१) कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥ ५ ॥ ( १२ । १२ )
२ जीवसंज्ञोन्तरात्मा (२) ऽन्यः सहजः सर्वदेहिनाम् ।
येनवेदयते सर्वं सुखं दुःखंच जन्मसु ॥ ६ ॥ ( १२ । १३ )
३ तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एवच ।
उच्चावचेषु भूतेषु स्थितं तं (३) व्याप्य तिष्ठतः ॥ ७ ॥ ( १२ । १४ )
४ असंख्या मूर्तयस्तस्य निष्पतन्ति शरीरतः ।
उच्चावचानि भूतानि सततं चेष्टयन्ति याः (४) ॥ ८ ॥ ( १२ । १५ )
५ पञ्चभ्य एव मात्राभ्यः (५) प्रेत्य दुष्कृतिनां नृणाम् ।
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम् ॥ ९ ॥ ( १२ । १६ )
६ तेनानुभूय ता यामीः शरीरेणेह यातनाः ।
तास्वेव भूतमात्रासु प्रलीयन्ते (६) विभागशः ॥ १० ॥ ( १२ । १७ )
७ सो (७) ऽनुभूयासुखोदर्कान् दोषान् विषयसंगजान् ।
व्यपेतकल्मषोऽभ्येति तावे (८) वोभौ महौजसौ ॥ ११ ॥ ( १२ । १८ )
८ तौ धर्मं पश्यतस्तस्य पापं चातन्द्रितौ सह ।
याभ्यां प्राप्नोति संपृक्तः (९) प्रेत्येह च सुखासुखम् ॥ १२ ॥ ( १२ । १९ )
९ यद्याचरति धर्मं सप्रायशोऽधर्ममल्पशः ।
तैरेव चावृता भूतैः स्वर्गं सुखमुपाश्नुते ॥ १३ ॥ ( १२ । २० )
१० यदि तु प्रायशोऽधर्मं सेवते धर्ममल्पशः ।
तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः ॥ १४ ॥ ( १२ । २१ )
११ यामीस्ता यातनाः प्राप्य सजीवो वीतकल्मषः ।
तान्येव पञ्च भूतानि पुनरप्येति भागशः ॥ १५ ॥ ( १२ । २२ )
१२ एता दृष्ट्वाऽस्य जीवस्य गतीः स्वेनैव चेतसा ।
धर्मतोऽधर्मतश्चैव धर्मे दध्यात् सदा मनः ॥ १६ ॥ ( १२ । २३ )

( मनुः । १२—२३ )

---

† अनन्तर प्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्न निरूपणाभ्याम् ( शारीरक सूत्रम् । ३ । १ । इति भगवान् कृष्णद्वैपायनः ॥

( १ ) भूतात्मनः ( २ ) महानात्मा । ( ३ ) प्रज्ञानाख्यं भूतात्मानम् ।
( ४ ) प्रज्ञमूर्तयः प्रज्ञामात्राः ( ५ ) भूतमात्राभ्यः शब्दस्पर्शरूपरसगन्धाख्याभ्यः
( ६ ) महत्–क्षेत्रज्ञ–भूतात्मानः । ( ७ ) भूतात्मा प्राज्ञः । ( ८ ) महत्क्षेत्रज्ञौ ॥
( ९ ) महत्–क्षेत्रज्ञाभ्यां संपरिष्वक्तः प्रज्ञानात्मा । ( १० ) प्रज्ञानात्मा ।
(११) स्वाधिष्ठानैः पृथगिव विक्षेपितः ॥

तदेतदेव श्रुतिराह च स्मृतिर्मृतस्य सद्योऽन्यशरीरधारणम् ।
नत्वेव मृत्योः समकालमस्य वा जन्म ग्रहं गर्भगतस्य भावयेत् ॥ ७ ॥

* "तद् यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मान
मुप संहरति एवमेवायमात्मा इदं शरीरं निहत्याविद्यां गमयित्वाऽन्य
माक्रममाक्रम्यात्मानमुपसंहरति ॥ तद्यथा पेशस्कारी पेशसोमात्रामुपादायान्यन्नवतरं
कल्याणतरं रूपं तनुते, एवमयमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं
कुरुते, पित्र्यं वा, गान्धर्वं वा, दैवं वा, प्राजापत्यं वा, ब्राह्मंवाऽन्येषां वा भूतानाम्"
( शत प० १४ । ७ । २ ) ( बृहदा० । ४ । ४ । ४ ) ॥ इति श्रुतिः ॥ ८ ॥

स्मृतिरप्याह—व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति
यथा तृणजलौकैवं देही कर्म्मं गतिं गतः ॥
( भागवते ) ॥ ६ ॥

## ९—मृत्युकाले कर्माधीनः क्वाचित्को जन्मसंभवः ।

मृत्युक्षणे जन्मपरिग्रहोऽपिवा संभाव्यते कर्मवशादिह कचित् ।
अकर्म्म-सत्कर्म्म-विकर्म्मणाममी गतिप्रभेदा गहना विलक्षणा ॥ १ ॥

## १०—हंसात्मनो वायुदेहस्य भूवायावस्थानम् ।

भूतात्मरूपं द्विविधं निरुक्तं विज्ञानपृक्तं भृशभूत सक्तम् ।
प्राज्ञस्य विज्ञानभृतस्य सेत्या, भूतानुषक्तस्य परत्र नेत्या ॥ १ ॥
देहप्रदाहोत्तरमेष भूतानुषक्तहंसः पृथगेतिदेहात् ।
वायव्यदेहश्चिरमत्र जीवान् इतस्ततः संचरति स्वतन्त्रः ॥ २ ॥
गन्धर्वेण गृहीता काप्यसुता श्रूयते माद्री ।
भूतावेशो नागादेशेषु च दृश्यते बहुधा ॥ ३ ॥
भूतोपशमाध्यायं पुनर्वसु प्रभृतयो ब्रवते ।
तस्माद्धंसात्मानोऽध्यवसेयाः सर्वजीवानाम् ॥ ४ ॥

## ११—प्रेत्यभावान्तर काल निर्णयः ।

यः प्रेत्यभावान्तरकालसंशयः, तत्रोच्यते कर्म्मणि कालनिर्णयः ।
कर्म्मानुगः स्यादपि मृत्युवासरे किंवा सहस्राधिकवत्सरान्तरे ॥ १ ॥

## १२—योनिपरिवर्तनव्यवस्था ।

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ १ ॥
प्राज्ञो महान् वा परिवर्तते न चेत् स प्राज्ञ नरस्तर्हि पुनर्नरो भवेत् ।
योन्यन्तरं स्यान् महतश्च्युतिक्रमे यथा शुकोऽन्ये च कति स्मृता इमे ॥ २ ॥

"सप्त[1] व्याधा दशार्णेषु, मृगाः[2] कालञ्जरे गिरौ।
चक्रवाकाः[3] शरद्वीपे, हंसाः[4] सरसि मानसे, ॥ ३ ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा[5] वेदपारगाः, ।
प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ" ॥ ४ ॥

## १३–मृतस्य नचिकेतसः पुनरुज्जीवनसंवादः।

**यत्त्वाह नैकोऽपि मृतः क्वचागतो द्रष्टुः स्वतो यस्य वचः प्रमाणतः।**
**स संपरायो विदितो भवेदिति ब्रूमस्तु तस्मै नचिकेतसो गतिम् ॥ १ ॥**

उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ। तस्य ह नचिकेता नाम पुत्र आस। त ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश। स होवाच पितरम्। तत! कस्मै मां दास्यसीति। द्वितीयं तृतीयम्। तं होवाच। मृत्यवेत्वा ददामीति।
"वैश्वानरः प्रविशति अतिथि र्ब्राह्मणो गृहान्।
तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम्" ॥ २ ॥

**१ मृत्यु रुवाच** तिस्रो रात्री र्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः।
नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥ ३ ॥

**(१)नचिकेताअर्थयते**–शान्तसंकल्पः सुमना यथा स्याद् वीतमन्युर्गौतमो माऽभि मृत्यो!।
त्वत्प्रसृष्टं माऽभि वदेत् प्रतीत एतत् त्रयाणां प्रथमं वरं वृणे ॥ ४ ॥

**(१)मृत्युःसमाधत्ते**–यथा पुरस्ताद् भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः।
सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम् ॥ ५ ॥

**(२)नचिकेताअर्थयते**–स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति।
उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ ६ ॥
स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्।
स्वर्गलोका अमृतत्वं भजन्त एतद् द्वितीयेन वृणे वरेण ॥ ७ ॥

**(२)मृत्युःसमाधत्ते**–प्र ते ब्रवीमि तदु निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन्।
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतन्निहितं गुहायाम् ॥ ८ ॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम्।
स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ ९ ॥

**(३)नचिकेताअर्थयते**-येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके।
एतद् विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ १० ॥

**(३)मृत्युःसमाधत्ते**-न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्।
अयं लोको नास्तिपर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ११ ॥
श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः।
आश्चर्यो वक्ता कुशलोऽस्य लब्धः आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ १२ ॥
न नरेण वरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः।
अनन्य प्रोक्ते गतिरत्र नास्ति अणीयान् ह्यतर्क्यं मनु प्रमाणात् ॥ १३ ॥
नैषा तर्केण मति रपनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ।
यां त्वमापः सत्यधृतिर्बतासि त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ॥ १४ ॥
तं दुर्दर्शं गूढ मनु प्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १५ ॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ १६ ॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ १७ ॥

## १४—प्रेत्यात्मसत्ता सिद्धान्तः ।

यत्तूक्तमात्मा स विना न वर्ष्मणा स्यान्नेन्द्रियाणि स्युरधिष्ठितिं विना ।
तत्रोच्यतेऽस्त्येव तु तस्य यातना देहं नु भूतानुशयानुभावितम् ॥ १ ॥

## १५—प्रेत्यसंज्ञानिषेधप्रतिषेधः ।

आत्मानमाहुः खलु सप्रमाणा एषोऽविनाशीति परीक्षमाणः ।
भूतेषु तिष्ठत्यखिलेषु सोऽयं यथा तथा श्रावयति श्रुतिर्नः ॥ १ ॥

१—तिलेषु तैलं दधनीव सर्पिरापः स्रोतः स्वरणीषु चाग्निः ।
एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनु पश्यति ॥ २ ॥
२—वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे ॥ ३ ॥
३—सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्या तपोमूलं तद् ब्रह्मोपनिषत् परम् ॥ ४ ॥

इति ( श्वेताश्वतरे १ )

आपो यथात्मा सरसो विशुष्का वायुं गताः स्युः सरसः क्षयाय ।
तथाऽयमात्मा वपुषो वपुष्टो बहिर्भवन् स्याद् वपुषः क्षयाय ॥ ५ ॥
कालत्रयन्त्रस्य रथस्य वात्मा विहङ्गदीपस्य यथा तथाऽस्तु ।
अमुष्य देहस्य तु चेतनात्मा विलक्षणो नास्य कदापि नाशः ॥ ६ ॥
रथे य आत्मास्ति न तस्य जाग्रत् स्वप्नः सुषुप्तिर्मृतिमोहमूर्छाः ।
ततो रथे नास्ति तथाऽयमात्मा यथा शरीरे विभवन् स भाति ॥ ७ ॥
यदस्ति वातावरणं विहङ्गप्रदीप एतद्धि शरीरमस्य ।
अर्चिस्तदात्मा निजयोनिनाशान्निर्वाणमेतीति वपुःप्रपातः ॥ ८ ॥
स्वयञ्च नाशाच्च तथाऽयमात्मा निर्वाणमायाति सचेतनानाम् ।
इति प्रदीपानुविधिं वदन्तो वैनाशिका आत्मविनाशमूचुः ॥ ९ ॥
अथापि तैरन्यशरीरयोगोऽभ्युपेयते पूर्वशरीरनाशे ।
स्वकर्म संतानवशात् तु नाना जन्मोत्तरं क्वाप्यपवर्गसिद्धिः ॥ १० ॥
यथा प्रदीपः परिवर्त्यतेऽयं भिन्नेषु वातावरणेषु काले ।
तथाऽयमात्मा परिवर्त्यमानो भवत्यनेकेषु वपुःषु काले ॥ ११ ॥
वयं वदामस्तु नचायमात्मा दीपार्चिषा साम्यमुपैत्यखण्डः ।
तत्कर्मजन्यातिशयस्य तस्मिन्नुपाहितस्य स्थिरतां प्रतीमः ॥ १२ ॥
पूर्वानुभूतं बहुभिः समाभिः स्मरत्यमुष्य स्थिर एष भावः ।
नैवास्थिरे त्वात्मनि स स्थिरः स्यात् संतानतोक्तिस्तु वृथाभिमानः ॥ १३ ॥

संतायमाना यदि भिन्न-भिन्नाः परानुभूतं न परः स्मरेत् सः ।
परोवरीणो यदि कश्चिदेकस्तदा तमात्मानमिह ब्रवीमि ॥ १४ ॥

## १६—मरणोत्तरमात्मनोऽसत्वे प्रमाण श्रुतेस्तात्पर्य्यनिर्णयः ।

यत्तु प्रवक्तिस्म स याज्ञवल्क्यो न प्रेत्य संज्ञेति, तदस्त्यकामे ।
वाक्यं, य आत्मा कचिदस्त्यकामो न प्रेत्य संज्ञा भवतीह तस्य ॥ १५ ॥
यः कश्चनाकामयमान आत्मा प्राणा न तस्य कचिदुत्क्रमन्ते ।
संभाव्यतेऽत्रैव लयस्तु तेषां ब्रह्मैव तद् ब्रह्म तदापि याति ॥ १६ ॥
मुख्यो य आत्मा परमश्चिदात्मा स कामतः सोमरसान्वितःस्यात् ।
स कामतः सूर्य्यरसान्वितः स्यात् स कामतो भौमरसान्वितः स्यात् ॥ १७ ॥
अमो परिच्छिन्नतमाश्रयो रसा असीम्नि चिद्भूम्नि हिताः स्वयोगतः ।
दधत्यवच्छेदमसन्तमात्मना घटो घटव्योम्नि यथाऽवकल्पते ॥ १८ ॥
तेषां रसानामपवर्जनादिदं विशुद्धचिन्मात्रमिहावशिष्यते ।
विभौ गतिर्नास्ति ततो निरावृतं चिद्ब्रह्म चिद्ब्रह्म तदाऽपि याति तत् ॥ १९ ॥
यो नैहिकान् कामयते तु कामान् ततोऽपवृक्ताः पृथिवीरसाः स्युः ।
स्वर्ग्यान् स कामान् लभतेऽथ पृथ्व्यां नैतस्य जन्मास्ति, स मुक्तआत्मा ॥ २० ॥
नामुष्मिकान् कामयते च कामान् ततोऽपवृक्ता द्युरसा अपिस्युः ।
स ब्राह्मणस्पत्यमितः स्वलोकं पृथ्व्यां च सूर्य्ये च न याति भोगम् ॥ २१ ॥
कामैरशेषैरपवृज्यमानः संपद्यते शुद्धतरश्चिदात्मा ।
विहाय कर्म्माणि च नामरूपे पराव्ययेनैति स एकभावम् ॥ २२ ॥
तथा च गाथा श्रूयते—

१-यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ॥ २३ ॥

अथापि वा चित् प्रकृतिः समस्तो भावश्चितः सर्वविधा रसास्ते ।
अविद्यया संप्रभवन्ति, विद्यातिशय्यतः स्वां प्रकृतिं गताः स्युः ॥२३ ॥
विद्यातिशय्यात् क्रमशश्च कामाः परा हताः स्युर्निखिला रसास्ते ।
चिद्रूपतां यान्ति, ततोऽखिलास्ते प्राणा इहैव प्रलयं व्रजन्ति ॥ २४ ॥
तथा च गाथा श्रूयते—

१-विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥ २६ ॥

## १७—प्रेत्यात्मनः सुखदुःखावश्यंभावः

यत्तूच्यते प्रेत्य सुखं न दुःखं स नूनमज्ञानकृतः प्रलापः ।
आत्मास्ति चेत् प्रेत्य, तदास्य न स्याद् दुःखं सुखं वेति न संभवोस्ति ॥ १ ॥
प्रेत्यैष आत्मा समनाः सहेन्द्रियः संस्कारवानित्यवदन् महर्षयः ।
तत्रेन्द्रियाणां विषयेषु वृत्तयः स्युर्वेदनीये मनसस्तथा धिया ॥ २ ॥

## १८—सांपरायिकाणां गति-मार्ग-लोकानां नान्तरीयकता।

आत्मास्ति चेत् तस्य गतिश्च यात्रा मार्गश्च लोकोपि च संभवेयुः,
स्थानान्तरप्राप्तिस्तस्य गतिः स लोको यत्र स्थितिर्यत्र गतेर्निवृत्तिः ॥ १ ॥
मार्गप्रभेदाद् गतिलोकभेदो लोकप्रभेदाद् गतिमार्गभेदः।
गतिप्रभेदाच्च तयोः प्रभेदो नान्योन्यमन्योन्यविनाकृतं स्यात् ॥ २ ॥

## १९—मार्गारम्भणानि।

कर्म्माणि[1] कालाश्च[2] शरीरनाड्यो[3]ऽन्तरिक्षनाड्यो[4]ऽप्यतिवाहकाश्च[5]।
एभिः कृतः पञ्चभिरस्ति योऽध्वा तेनायमात्मा क्रमते परत्र ॥ ३ ॥
विद्यापि कर्म्मैव गतौ निमित्तं प्रपद्यते किन्तु तदात्मरूपम्।
विद्यावशात् कर्म्मबलापकर्षो नैष्कर्म्यविद्याऽऽत्मगतिं रुणद्धि ॥ ४ ॥

## २०—कर्म्माणि।

देशः कालः पात्रं द्रव्यं श्रद्धेति पञ्चभिस्त्वेभिः।
सहितो यत्नो जनयति यं संस्कारं तदुच्यते कर्म्म ॥ ५ ॥
यैः सा सुषुम्णा गतिरस्ति, वा यैरिडागतिः, पिङ्गलया गतिर्यैः।
ऊर्ध्वा गतिर्यैरधरा गतिर्यैः कर्म्माण्यतोऽनेकविधानि तानि ॥ ६ ॥

## २१—शरीरनाड्यः।

तिस्रोऽत्र नाड्यो नरविग्रहेऽधरा त्विडा, सुषुम्णाऽन्तरुदक् तु पिङ्गला।
सुषुम्णयोत्क्रमस्य वियत् सुषुम्णया सूर्यं गतः स्कम्भमुपैति मुक्तये ॥ १ ॥
नाड्येडयोत्क्रामति यः स दक्षिणां नाड्येडयाऽऽतः पितृयाणतो गतिम्।
भुक्त्वा स्वकर्माणि च कर्म्मशेषतः पुनर्भुवं प्राप्य स जन्मभाग् भवेत् ॥ २ ॥
शारीर आत्मोत्क्रमते त्विडातः स्यात् पिङ्गलातश्च निसर्ग एषः ॥
कश्चित् सहस्रेषु कदाचिदेकः सुषुम्णयाऽप्युत्क्रमते विशुद्धः ॥ ३ ॥
येषां सुषुम्णा गतिरस्ति तेषामुत्क्रामति ब्रह्मकपालभेदात्।
तस्यैष्यते ब्रह्मपथोऽथ सव्या सव्याङ्गतो देवपथे च पित्र्ये ॥ ४ ॥
विद्योदयो यस्य निवृत्तकर्म्मणो निवृत्तकामस्य च शान्तचेतसः।
तस्याप्यते ब्रह्मपथोऽथ याजिनां तपस्विनां देवपथश्च पैतृकः ॥ ५ ॥

विद्यया तदारोहन्ति यत्र कामाः पराहताः।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥ ६ ॥

## २२—शरीरादात्मोत्क्रमदिग्विभागः ।

हृदयादुत्क्रममाणो ब्रह्मग्रन्थ्यनुगतो वा स्यात् ।
स ब्रह्मरन्ध्रमनु वा ततोऽधरा वा गतिर्वोर्ध्वा ॥ १ ॥
शतं चैका च हृदस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ २ ॥
( कठ. २ । ६ । १६ ) ( छान्दो. ८ । ६ । ६ )
हृदयादात्मोत्क्रान्तो मूर्द्धप्रदिशा प्रयन् रविं याति ।
सूर्य्यज आत्मा स्वकरैः सूर्य्यगृहीतोऽस्ति तत्र दिशि ॥ ३ ॥
हृदयादात्मोत्क्रान्तो मूलाधारानुगस्त्विमां याति ।
सूर्य्यज आत्मा त्विडया दिशि हि पृथिव्या धृतस्तत्र ॥ ४ ॥
हृदयादात्मोत्क्रान्तो वामाङ्गेभ्यस्तनुं यदि त्यजति ।
आत्मा स तेन सत्येनाध्वानं याति पितृयाणम् ॥ ५ ॥
हृदयादात्मोत्क्रान्तो दक्षिणगात्रेभ्य उत्क्रमते ।
आत्मा स तेन सत्येनाध्वानं देवयानमियात् ॥ ६ ॥

## २३—अन्तरिक्षनाड्योंऽशानुक्रमतो विभक्ताः

यावत् खगोलं परितोऽवलोके तत् पञ्चधा भक्तमितः प्रतीमः ।
पृथ्वी परिक्रामति सूर्य्यमेतं येनाध्वना मध्यमभाग एषः ॥ १ ॥
भूमार्गतो भूः कुटिला, ध्रुवद्वयान्तर्वैषुवं मध्यममण्डलं भुवि ।
ततश्च वृत्तत्रयमस्ति दक्षिणे तथोत्तरे, सप्तसु दृश्यते रविः ॥ २ ॥
द्वादशाष्टचतुरंशतः क्रमाद् वैषुवादुदगवाक् त्रयं त्रयम् ।
छंदसां भवति तैश्च सप्तभिश्छन्दितो रविरुदूह्यते हयैः ॥ ३ ॥
तावत् सुषुम्णाऽग्निमयी तु नाडी वैश्वानराख्यः प्रथते स मार्गः ।
भौमाग्निसूर्य्याग्नितदन्तराग्न्युदूघर्षात् स वैश्वानर आचितोऽग्निः ॥ ४ ॥
भूगर्भतस्तूत्क्रमतेऽङ्गिरोऽग्निः सूर्य्यादिहायाति हिरण्मयोऽग्निः ।
विश्वानराभ्यां जनितोऽग्निरन्यो वैश्वानरो याति दिवं भुवं च ॥ ५ ॥
द्विन्यूनपञ्चाशदमुष्य मार्गस्यांशाः परिख्याति स्वागुदग्भ्याम् ।
अवाक् ततोऽष्टादश ये दिवोंऽशा अगस्त्यभान्ताः पितृयाण एषः ॥ ५ ॥
सोमाः सदोर्ध्वात् प्रचरन्त्यधस्तात् पृथ्व्यां प्रविष्टाः प्रचरन्त्यवाच्याम् ।
सूर्य्योऽभिजिद्भानुदिशप्रचारात् पृथ्व्यां प्रविष्टाः प्रचरन्त्युदीच्याम् ॥ ६ ॥
इडास्ति सा सोममयी तु नाडी सोमा य ऊर्ध्वादध आचिताः स्युः ।
सोम्या हि सर्वे पितरस्ततोऽयं मार्गः प्रसिद्धः पितृयाणनाम्ना ॥ ७ ॥
स धूममार्गः स च कृष्णमार्गस्तेनाध्वनैवोत्क्रमते तु रात्र्या ।
ज्योतिर्म्मयोऽप्यस्ति य एनसाऽवैर्वृतः कृतः कृष्ण इवैष आत्म ॥ ८ ॥

अष्टादशांशा अयनात् तु दक्षिणाः स कृष्णमार्गः पितृयाणसंज्ञकः ।
यत् त्रिंशदंशेऽयनतोऽस्त्यगस्त्यभं स्थौल्यात् कृतं तत्तु दिशोपलक्षकम् ॥ ९ ॥
ततः कदम्बोऽस्ति जिनान्तरेऽधरो यो वृत्तपादे ( ९० ) पृथिवी परिक्रमात् ।
कदम्बमेतं परितो जिनान्तरे यावान् प्रदेशो नरकः स उच्यते ॥ १० ॥
इत्थं यथा मध्यविभागतोऽधस्तथा विभागास्तत एव चोर्ध्वाः ।
तावत् प्रमाणाः क्रमतो निरुक्ता लोकास्त्रयस्ते कथितास्तथाहि ॥ ११ ॥
सूर्यं परिक्रामति भूमिपिण्डो येनाध्वना सोऽस्ति च भूमिलोकः ।
भूलोकतोऽस्मादुभयोर्दिशाद्वौ मार्गौ मतावात्मविनिष्क्रमाय ॥ १२ ॥
यथा त्वधस्तात् पितृयाण उक्तस्तथोपरिष्टादिह देवयानः ।
अष्टादशांशा अयनादिहोर्ध्वाः स देवयानः स च शुक्लमार्गः ॥ १३ ॥
सा पिङ्गला सूर्यमयी तु नाडी तत्रादितेया ध्रुवमाचिताः स्युः ।
ये देवयानावधयो निरुक्ताः सप्तर्षयस्तेऽप्युपलक्षकाः स्युः ॥ १४ ॥
अधो यथा सोमरसानिडाख्यानारूढ आत्मैति गतिं तदीयाम् ।
तथैह चारुह्य स पिङ्गलाख्यानादित्यरश्मीनुपरि प्रयाति ॥ १५ ॥
एते गती द्वे अपि शुक्लकृष्णे सामान्यतः सर्वजनेषु विद्यात् ।
जिनान्तरे यस्तु कदम्ब ऊर्ध्वः स वृत्तपादे ऽस्ति च भूमिमार्गात् ॥ १६ ॥
दिव्येषनाको ध्रुवतो जिनान्तरे स स्कम्भमूर्धास्ति रवेः शिरोदिशि ।
स चोत्तमः स्वर्ग इह प्रयाति चेन्नावर्ततेऽसौ पुनरत्र भूतले ॥ १७ ॥

## २४—अन्तरिक्षनाड्यश्चन्द्रानुक्रमतो विभक्ताः ।

य एष चन्द्रः परितो धरित्रीमिमां चरत्यस्य च वर्त्म यावत् ।
या सूर्यनाडी पृथिवीसभर्गा तामेव धीरा ब्रुवते सुषुम्णाम् ॥ १८ ॥
नाड्यस्तु यावत्य इतः स्युरूर्ध्वास्ता पिङ्गला नाम सहस्ररश्मेः ।
तस्यैव यावत्य इतोऽधराः स्युस्ता वा इडा नाम वदन्ति वृद्धाः ॥ १९ ॥

## २५—पृथिवीपृष्ठादात्मोत्क्रमदिग्विभागः ।

पृथिवी पृष्ठादात्मा चरेत् प्रतीचीमवाचीं वा ।
प्राचीमपि वोदीचीमाद्यौ नरकौ परौ स्वर्गौ ॥ २० ॥
पृथिवीपृष्ठादात्मा लोकालोकानुदिशमेयात् ।
यावत् स विप्रकर्षं याति लभेताधिकं दुःखम् ॥ २१ ॥

"असुर्या नामते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" ( ईश० ) ॥ २२ ॥

पृथिवीपृष्ठादात्मा संभवतोऽधः स दक्षिणां गच्छेत् ।
यावत् स विप्रकर्षं याति लभेताधिकं दुःखम् ॥ २३ ॥

'अनन्दा नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधोजनाः ॥ ( बृह० ४ । ४ । ११ ) ॥ २४ ॥

पृथिवी पृष्ठादात्मा संभवतः सूर्य्यदिशमेयात् ।
यावत् स विप्रकर्षं याति लभेताधिकं स सुखम् ॥ २५ ॥
पृथिवी पृष्ठादात्मा संभवतोऽप्युत्तरां दिशं प्रेयात् ।
यावत् स विप्रकर्षं याति लभेताधिकं स सुखम् ॥ २६ ॥
आदित्ये यः पुरुषः सोऽहं, सूर्य्यादुपैति नः प्राणः ।
यावत् सूर्य्याद् दूरं याति प्राणः प्रहीयते तावत् ॥ २७ ॥
प्राणोऽपहीयमानः क्रमतः कृच्छ्राणि भावयति ।
स हि सूर्य्यसंनिकर्षाद् भूयान् लब्धः सुखं तनुते ॥ २८ ॥
आनन्दचित्सदात्मा नाकमनूदक् परोरजा जयति ।
दक्षिणदिशि प्रयातास्ततः क्रमाद् विप्रकृष्यन्ते ॥ २९ ॥
उत्तरदिशि तु गतानामात्मा बलवान् प्रसन्नतामेति ।
तत्तद्दिशि गतिहेतुर्विद्या कर्म्मेति विद्यया विद्यात् ॥ ३० ॥

## २६—आतिवाहिकानि ।

अथ देहादुत्क्रान्तः पदमाप्यं यावताप्नोति ।
पर्वाणि पञ्च तावति पथि तान्येवातिवाहिकानि स्युः ॥ ३१ ॥
[१]अ[२]र्चिरहः [३]सित[४]पक्षोऽप्युदगयनं [५]वत्सरः सौरः ।
एतेतिवाहकाः स्युस्ते त्विह विक्षेपनोदना प्राणाः ॥ ३२ ॥
[१]देहाद् [२]भुवो[३]ऽब्जपथतः [४]पृथ्वीपथतो [५]बृहत्साम्नः ।
सूर्य्यदिशावच्छिन्ने ज्योतिषि सौरेऽग्निरेव संक्रमते ॥ ३३ ॥
[१]देहाद् [२]भुवो[३]ऽब्जपथतः[४]पृथ्वीपथतोऽथ [५]राजनात् साम्नः ।
भूमिदिशावच्छिन्ने ज्योतिषि चान्द्रे ऽग्निरेव संक्रमते ॥ ३४ ॥

## २७—अतिवाहकसंयोगहेतवः कालाः ।

सूर्य्यज्योतिषि चान्द्रज्योतिषि वाऽग्निर्यदेष संक्रमते ।
दिग् विक्षेपप्राणाः कालाः संयोग हेतवस्तत्र ॥ ३५ ॥
ज्योतिरहःसितपक्षोऽप्युदगयनं वत्सरः सौरः ।
एतेऽतिवाहकानां संयोगायोपयोगिनः कालाः ॥ ३६ ॥

## २८—आत्म गतौ कर्म्मणां मुख्यनिमित्तत्वम् ।

एषामपि तु चतुर्णां मुख्यो हेतुः प्रतीयते कर्म ।
आत्मनि यो गतिहेतुः संस्कारः कर्मनामा सः ॥ ३७ ॥
येऽरण्यगा ब्रह्मविदस्त्वकामा यज्ञस्तपोदानमितो निवृत्ताः ।
ते देवयानस्य पथोऽतिवाहानाप्त्वा रविं ब्रह्मपथेन यान्ति ॥ ३७ ॥

"विद्यया तदारोहन्ति यत्र कामाः पराहताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः," ॥ ३८ ॥
येऽरण्यगाः कामविरक्तचित्ता यज्ञस्तपोदानमिति प्रवृत्ताः ।
ते देवयानस्य पथोऽतिवाहानाप्त्वा रविं शुक्लपथेन यान्ति ॥ ३९ ॥
ग्रामे वने वा यदि कामवश्या यज्ञस्तपोदानमिति प्रवृत्ताः ।
ते चातिवाहान् पितृयाणमार्गस्याप्त्वा विधुं कृष्णपथेन यान्ति ॥ ४० ॥
ग्रामे स्थिताः कामवशाः सुवृत्ता इष्टे च पूर्ते च रताश्चदत्ते ।
ते चातिवाहान् पितृयाणमार्गस्याप्त्वा यमं कृष्णपथेन यान्ति ॥ ४१ ॥
इति गतिमार्गरूपाणि ॥ * ॥

## २९—आत्म गति भेदाः

गतिस्त्रिधा ब्रह्मपथे विशिष्टा, सामान्यतो द्वे अवरे भवेताम् ।
सा देवयाने पितृयाण एवं ते कर्मणा, कर्म निवृत्तितोऽन्या ॥ ४२ ॥
स्यादुत्तमस्वर्गगतिस्तु काम प्रनाकयोर्ब्रह्म पथेन मुक्तचै ।
द्वौ देवयानौ हवनीयसूर्य्यौ यमोऽप्यसूर्य्यः पितृयाणभेदौ ॥ ४३ ॥
इतः प्रभिन्ना त्वगतिः पृथिव्या पिशाचयोनिर्बहुदुःखभाजाम् ।
हृद्ग्रन्थिभेदात्त्वति कामहानाद् ब्रह्माप्ययोऽत्रैव न चोत्क्रमोऽस्य ॥ ४४ ॥
भूतानि पञ्चत्वगतिं तथैते देवाश्च पञ्चत्वगतिं लभन्ते ।
देहात्यये स्युर्गतयो दशैताः स्याज्जीवतः स्वर्गगतिस्तु यज्ञात् ॥ ४५ ॥
पृथ्वी पृथिव्यां, जलमप्सु, तेजस्तेजस्ययं, वायुरपीह वायौ ।
वाग् वाचि पञ्चापि शरीरधातुद्रव्याणि पञ्चस्वपि यन्ति काले ॥ ४६ ॥
वाक्. प्राणचक्षूंषि. मनः. श्रुती वा अग्नौ च, वायौ च, रवौ च, चन्द्रे ।
दिक्षु क्रमेण प्रविशन्ति, सर्वे प्राणाः स्वयोनीनपियन्ति देवान् ॥ ४७ ॥
* यः प्रहितां संयोगः प्रयतां संयोग इतिवा यः ।
ते द्वे पञ्चत्वगती जीवत्याद्या मृते चान्त्या ॥ ४८ ॥
नूनं यज्ञस्तायते वाऽप्यजस्रं यज्ञो वा संतिष्ठते चाप्यजस्रम् ।
स्वर्गं गत्यै युङ्क्त एषोऽप्यजस्रं स्वर्गं गच्छत्येष तेनाप्यजस्रम् ॥ ४९ ॥
( शत. ६ कां ४ प्र. १ ब्र. १५ कं )

## ३०—अथ स्वर्गनरकलोकोपपादनम् ।

सुखभोगाय निमित्तं स्वर्गो नरकस्तु दुःखभोगाय ।
आनन्दः सुखमस्य प्रतिपुरुषं तारतम्यमिह ॥ ४९ ॥
आनन्दानां मात्रा पृथ्व्यां प्राणिषु विवर्द्धते यद्वत् ।
क्रमशः प्रवर्द्धते सा सूर्य्यककुभि पारमेष्ठ्ये च ॥ ५० ॥

मीमांसाऽऽनन्दानां बहुधा श्रुतिषु प्रदर्शिताऽभिज्ञैः ।
तन्मात्रायाः क्वचिदपि परमा काष्ठा ध्रुवं प्रभवेत् ॥ ५१ ॥
सैवं परमा काष्ठा यत्रानन्दस्य भाव्यते क्वापि ।
स स्वर्गस्तत्रापि च नानात्वं तारतम्यात् स्यात् ॥ ५२ ॥
एवं दुःखाधिक्यं भूलोकापेक्षया यत्र ।
संभाव्यते स नरकः सूर्यप्रतिदिग्गतः स स्यात् ॥ ५३ ॥
सुलभा यत्रातितरां सामग्री दुःखभोगाय ।
नरकः सोऽन्यः स्वर्गः सुखभोगौपयिकसामग्र्या ॥ ५४ ॥

## ३१—स्वर्गचातुर्विध्यम् ।

स्वर्गचतुष्टयमस्ति, त्रिविष्टपत्वात् त्रिधा त्वन्यत् ।
ब्रह्मस्य विष्टपं यत् तदिह चतुर्थं सुखं धाम् ॥ ५५ ॥
अवमः[१] परमो[२] मध्यम[३] उत्तम[४] इति भेदतो य इमे ।
स्वर्गाः सन्ति चतुर्धा तेषां रूपाणि कथ्यन्ते ॥ ५६ ॥

## ३२—अवमः स्वर्ग आहवनीयाख्यो दैवात्मकृतः ।

ज्योतिष्टोमात् स्वर्गो विधीयते सोऽवमः स्वर्गः ।
आहवनीयः स्वर्गो वाजसनेयश्च तौ कथितः ॥ ५७ ॥
वाचो ह्यग्निमयूखा अहानि पृथ्व्याः पृथिव्युत्थाः ।
सन्ति रथन्तरसामानि षट्स्तोमाः संतताः पृथिव्यह्नाम् ॥ ५८ ॥
त्रिवृ[९]दथ पञ्चदशो[१५]ऽन्यः सप्तदशो[१७]ऽन्यस्तथैकविंशो[२१]ऽन्यः ।
त्रिणवो[२७]ऽन्यश्च ततोऽन्यस्तथा त्रयस्त्रिंश[३६] इत्याहुः ॥ ५९ ॥
चत्वारोऽग्नेः स्तोमाः स्तोमौ सोमस्य तत ऊर्ध्वम् ।
स्तोमचतुष्टयभेदादेकोऽप्यग्निश्चतुर्विधो भवति ॥ ६० ॥
त्रिवृदथ पञ्चदशोऽयं सप्तदशश्चैकविंश इति कृत्वा ।
स चतुष्टोमो ज्योतिष्टोमस्ते ज्योतिषां स्तोमाः ॥ ६१ ॥
सोऽग्निष्टोमोऽप्युक्तः स्तोमाश्चत्वार आतता अग्नेः ।
आहवनीये ह्यग्नौ स चतुष्टोमो विधीयते यज्ञः ॥ ६२ ॥
अधिभूताग्निद्वाराऽध्यात्माग्नेराधिदैविके ह्यग्नौ ।
वाचा मन्त्रैः सोमश्लेषणतो यजति यज्ञः सः ॥ ६३ ॥
यजनं संगतिकरणं देवानां सोमतः कृताच्छ्लेषात् ।
अद्भिः श्लेषाद् यद्वच्चूर्णानां संगतिः क्रियते ॥ ६४ ॥
रथन्तरे पृथिव्या अग्नावग्निस्तु यस्य शारीरः ।
यजते स हि यजमानो मानुषदेवप्रभेदतो ह्यात्मा ॥ ६५ ॥

देहोऽस्य हविर्वेदिस्तत्राहवनीय इष्यतेऽस्य शिरः ।
तत आरभ्य रथन्तरसामान्तेयं महावेदिः ॥ ६६ ॥
यूपस्तदन्तनिहितः स एकविंशोपगः सूर्य्यः ।
यः सूर्य्य एकविंशो यूपस्तस्योपलक्षणं क्रियते ॥ ६७ ॥
आहवनीयस्तूत्तरवेद्यामर्वाग् विधीयते यूपात् ।
तेन च सूर्यादर्वाक् सप्तदशः स्तोम उपलक्ष्यः ॥ ६८ ॥
आहवनीयेऽत्राग्नौ वाचा सोमं जुहोति यजमानः ।
तेनाहवनीयेऽस्मिन् यजमानाग्नेः पदं हितं भवति ॥ ६९ ॥
अग्निष्टोमाद् यज्ञदेहाग्निः स्याद् रथन्तराग्निहितः ।
दैहिक जनलोके मानुष आत्मेति देवरथरूढः ॥ ७० ॥
आहवनीयस्त्वग्निर्यूपादर्वाग् विधीयते तेन ।
सूर्यादर्वागात्मा सप्तदशे स्तोम आस्थितो भवति ॥ ७१ ॥
अग्निष्टोमो ज्योतिष्टोमस्तेनास्य दैहिकोऽप्यग्निः ।
सप्तदशान्तः प्रततस्तत्र नेत्यो रच्यते सुरथ ॥ ७२ ॥
आहवनीयः सोऽर्वाक् सूर्यस्य स्कम्भपरिसरगः ।
तत्र च सूर्य्यसदेशं गत आत्मा सूर्यजः सुखी भवति ॥ ७३ ॥
यज्ञात्तु दैव आत्मा योऽन्यः संपद्यते तेन ।
सहचर आत्मा मानुष एव स्वर्गं प्रयात्यत्र ॥ ७४ ॥
एतस्मात् पुनरवमात् स्वर्गाद् भुक्त्वा स्वकर्माणि ।
पुनरिह पृथ्व्यां जन्म ग्रहीतुमायाति भुक्तशेषेण ॥ ७५ ॥
महतो यज्ञात् परमं सुखमतियज्ञात् स इन्द्रत्वम् ।
स्वर्गं न त्वपवर्गं लभते यज्ञाद् ऋते चयनात् ॥ ७६ ॥

## २३—त्रिणाचिकेताख्य-स्वर्ग्याग्निकृताः स्वर्गा अवममध्यम-परमोत्तमाः ।

१ भौमोऽस्ति वाग्विशेषोऽग्निर्दिवि सौरोऽग्नौ स चीयमानोऽस्ति ।
सप्तदशे चितिरनयोः प्राजापत्ये स दिव्योऽग्निः ॥ ७७ ॥
दिव्येऽग्नौ यज्ञाग्निद्वारा यजमानदेहाग्निः ।
यः संस्क्रियते चयनात् स स्वर्ग्योऽग्निस्त्रिणाचिकेताख्यः ॥ ७७ ॥
एव त्रिणाचिकेतो नयतेऽध्वरिणं तमत्र सप्तदशे ।

( अवम स्वर्ग[1] )

२ अग्निचितं चयमग्निस्तमेकविंशे नयेत् सूर्य्ये ॥ ७९ ॥

( मध्यम स्वर्ग[2] )

अष्टादशमारभ्य स्कम्भः स्यादाचतुर्विंशात् ।
तत्रैकविंश एव प्रतपति सूर्यः परः स्वर्गः ॥ ८० ॥

३—स्तोमोऽस्ति पञ्चविंशस्त्वहरविवाक्यं परः स्वर्गः ।
( परमः स्वर्गः )
छन्दोमस्तोमानां नभ्यमहः सप्तदशवत् तत् ॥ ८१ ॥
गायत्रो यस्त्रैष्टुभ एवं यो जागतः स्तोमः ।
छन्दोमस्तोमास्ते जागतनाभौ स पञ्चविंशः स्यात् ॥ ८२ ॥
अथवा छन्दोमानां सप्तदशोर्ध्वास्ति यावती व्याप्तिः ।
पादोऽत्र पञ्चविंशः स हि परमः स्वर्ग आख्यातः ॥ ८३ ॥
स हि कामप्रो लोको लोकश्चाशोकमहिमाख्यः ।
तस्मादूर्ध्वं कारणदेहापरमात् परा मुक्तिः ॥ ८४ ॥

४—सूर्य्यो द्यौरथ सूर्यस्कम्भस्योदक्छिरो बिन्दुः ।
( उत्तमः स्वर्गः )
स्वर्गः स नाकसंज्ञस्ततऊर्ध्वं पारमेष्ठ्यं च ॥ ८५ ॥
उत्तम एव स्वर्गः कामप्रोऽशोकमहिम इत्युक्तः ।
अत्रहि शान्तानन्दस्तत्र सुखं वर्णयन्ति यथा ॥ ८६ ॥
"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्" ॥ ८७ ॥
स्कम्भस्यार्वाक् स्तोमः (१) स पराक् स्तोमः (२) शिरो (३) बिन्दुः ।
एष त्रिविधः स्वर्गस्त्रिविष्टपं कथ्यते पूर्वैः ॥ ८८ ॥
ब्रध्नस्य (४) विष्टपं तु स्कम्भस्यैतस्य मध्यगः सूर्य्यः ।
पुरुषः प्रजापतिः स हि यात्र परा भाः स मध्यमः स्वर्गः ॥ ८९ ॥

## ४—मध्यमः स्वर्गो ब्रध्नस्य विष्टपाख्यस्त्रिणाचिकेतकृतः ।

ज्योतिःपिण्डः सूर्यनामेद्यते यो ज्योतिष्मत्यस्तत्र सर्वाः प्रजाः स्युः ।
तत्रात्माऽयं याति चेत् तर्हि तस्मान्नासौ प्रत्यावर्तते स्वर्ग एषः ॥ ९० ॥
सूर्यादिन्द्रो रश्मिभिः सन्ततः सन्नेषां पुंसां ह्यवाप्य स्थिरत्वम् ।
आयुः प्रज्ञा चोच्यते सोऽयमात्मा तं स्वं योनिं प्राप्य बन्धाच्च्युतः स्यात् ॥ ९१ ॥
ऐन्द्रः प्राजापत्यः स्वर्गोऽयं सूर्य्यपिण्डो यः ।
तत्र च वैद्युतपुरुषो गमयत्यात्मानमानन्दम् ॥ ९२ ॥

"अणुः पन्था विततः पुराणो मां स्पृष्टो अनुवित्तो मयैव ।
तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गलोकमित ऊर्ध्वं विमुक्ताः ॥ ९३ ॥
( बृह. ४ । ४ । ८ ) ( शत. १४ । ७ । २ )
तस्मिन् शुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च ।
एष पन्था ब्रह्मणा हानुवित्तः तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च ॥ ९४ ॥
( बृह. ४ । ४ ९ ) ( शत. १४ । ७ । २ )

## ३५—मध्यमः स्वर्गः स्कम्भाख्यः ।

स्कम्भस्य मध्यवर्ती सूर्य्यः स्वर्गः स इत्थमाख्यातः ।
अथवा कृत्स्नः स्कम्भः स मध्यमः स्वर्ग आस्थेयः ॥ ९५ ॥
कौषीतकिनः पश्यन्त्यष्टादशतोऽयमाचतुर्विंशात् ।
स्वर्गः सप्तविभक्तः सप्तस्वर्गास्त उच्यन्ते ॥ ९६ ॥
अग्निर्[18] वायुर्[19] वरुण[20] आदित्या[21] विन्द्रः[22] प्रजापतिर्[23] ब्रह्म[24] ।
एषां येन धृतः स्यात् तल्लोकस्थः स आत्मोक्तः ॥ ९७ ॥
भौमप्राणाकृष्टो जीवन्नात्मा यथा भवति ।
एवं तत्तद्देवेनाकृष्टस्तद्गतो भवति ॥ ९८ ॥
पश्चातिवाहिका ये सन्त्यर्चिःप्रभृतयो मार्गे ।
यावत् तेष्वयमात्मा तावत् स्यादग्निलोकस्थः ॥ ९९ ॥
सप्तदशेऽपि स्तोमे गत एषोऽस्त्यग्निलोकस्थः ।
अग्नेर्वायुगतः सन् स ऊनविंशे गतो भवति ॥ १०० ॥
सप्तविभक्तः स्वर्गः स एक एवास्ति यः स्कम्भः ।
पारेऽस्य पञ्चविंशोऽविवाक्यमथ पारमेष्ठ्यं च ॥ १०१ ॥

## ३६—सन्दिहानेभ्योऽनभिज्ञेभ्य आदेशाख्यम् ।

आहवनीयः(1) स्कम्भः(2) सप्तविधश्चाविवाक्यं(3) च ।
नाकश्चेति(4) विभागात् स्वर्गाश्चत्वार आख्याताः ॥ १०२ ॥
ते स्वर्गाः प्रतिपत्तुं वैदिकविज्ञानतः शक्याः ।
न च मूढैरवगम्या विदुषां प्रत्यक्षवत् ते स्युः ॥ १०३ ॥
कर्म्माणि दुःखमुक्त्यै सुखमुक्त्यै सन्ति बन्धमुक्त्यै च ।
सर्वे धर्म्मग्रन्था एतैरेवोपपाद्यन्ते ॥ १०४ ॥
पापत्वं पुण्यत्वं बहुभिर्यत्नैः परीक्षितं पूर्वैः ।
शक्या सा च परीक्षा वैदिकविज्ञानशिक्षया कर्तुम् ॥ १०५ ॥
अपरीक्ष्य नावहेला कार्य्या विज्ञानभावनाशून्यैः ।
विद्वद्भिर्भवितव्यं श्रद्धया दीर्घदर्शिनां दृष्टिः ॥ १०६ ॥
आप्तैः प्रदर्शिते पथि नावज्ञानेऽपि कुर्य्युरनभिज्ञाः ।
भगवान् कठो यमस्य च वचनं साधु न्यदर्शयत् पूर्वम् ॥ १०७ ॥

> अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः ।
> तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १०८ ॥
> श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।
> श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ १०९ ॥
> दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
> विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्त ॥ ११० ॥

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ १११ ॥
पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ ११२ ॥
पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ ११३ ॥
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ ११४ ॥



इति विशिष्टत्रिसत्योपनिषदि सर्वासत्यवाद
प्रतिवादः प्रथमः खण्डः ।

( १ )

# अथायमप्रामाण्यवाद प्रतिवादो द्वितीयः खण्ड आरभ्यते ॥

## १—ज्ञानप्रामाण्यसिद्धिः ।

१ संशय्य ये संशयवादिनोऽन्ये वेद्यं च वेत्तारमिहेश्वरं च ।
अशेष संदिग्धमिदं समस्तं वदन्ति तद् भ्रान्तमिति प्रतीमः ॥ १ ॥
सर्वं प्रमाणं मतमप्रमाणं न हि प्रमाणाय परं प्रमाणम् ।
इत्थं यदुक्तं तदसत् प्रमाणं स्वतः प्रमाणं रविवद्विभाति ॥ २ ॥
अभास्वतो भासयितुं पराभा अपेक्षते भास्वति नास्त्यपेक्षा ।
तद् भास्यमान स्वत एव भास्वद्यभास्वदाभासयते स्वभावात् ॥ ३ ॥
तस्माद् ध्रुवं ज्ञानमिदं स्वरूपात् प्रमाणमेवास्ति परानपेक्षम् ।
ज्ञान भवेत् किन्तु न तत् प्रमाणं भवेदिति व्याहतभाषितं स्यात् ॥ ४ ॥
ज्ञानं तु नास्तीति य आह शाखामध्यास्त यां तामिव स छिनत्ति ।
वन्ध्याप्रसूर्मेऽजनयन्न सा मामित्थं प्रलापी स निगूहति स्वम् ॥ ५ ॥
ज्ञानं न चेत् स्याज्जडवत् समस्ते शून्ये विचारावसरः क तस्य ।
इदं जगत् पश्यति वक्ति सद्वासद्वा न पश्यामि न वच्मि वक्ति ॥ ६ ॥
यदेतदाभाति जगत्प्रकारं तज्ज्ञानमेकं ध्रुवमस्ति सत्यम् ।
ज्ञाने स्थितार्था अखिला जगत् स्याज्ज्ञानं तु तद्भिन्नमपुष्पतूलम् ॥ ७ ॥
ज्ञाने गृहीता विषया असत्याः सत्या द्विधावेति यथा तथास्तु ।
ज्ञानं तु तद्ग्राहकमेतदेकं नास्तीति कः पारयतेऽत्र वक्तुम् ॥ ८ ॥
अक्षैर्बहिर्ज्ञानमतोऽक्षदोषाद्दोषोऽर्थचित्ताबुदितः कचित् स्यात् ।
सदोषया वा बहिरर्थवित्त्या दोषः कचिच्चान्तरवित्तिगः स्यात् ॥ ९ ॥
मत्त्वात्मनः स्वीयमिदं विवेकज्ञानं विशुद्धं तदिह प्रमाणम् ।
धूमावृतं दूषिततैलजन्यं ज्योतिः स्वरूपेण न दूषितं स्यात् ॥ १० ॥

## २—प्रत्यक्षप्रामाण्यस्थापनम् ।

१ प्रत्यक्षमत्रानुमितिश्च शाब्दं ज्ञानप्रभेदाः प्रभवन्ति किन्तु ।
प्रत्यक्षमत्र प्रथमं तदीयप्रामाण्यतोऽन्यद् भवति प्रमाणम् ॥ ११ ॥
प्रत्यक्षमेके विदुरप्रमाणं यदप्रमाणं न हि तत् प्रमाणम् ।
ज्ञानं हि तच्चास्त्युपलब्धिहेतुः कथं भवेन्नाम न तत्प्रमाणम् ॥ १२ ॥

२ सन्तीन्द्रियस्थानसमुद्भवा ये गन्धादयस्तात्क्षणिका हि भावाः ।
प्रत्यक्षतस्तान् प्रविदन्ति तस्माद् ध्रुवं प्रमाणानि तदिन्द्रियाणि ॥ १३ ॥

तेषां तु या मे प्रतिपत्तिरस्ति प्रत्यक्षपूर्वा यदि सोपपत्तिात् ।
प्रकल्प्यते तर्ह्यपि सिद्धमेव प्रत्यक्षमेवेन्द्रियजं प्रमाणम् ॥ १४ ॥

३ व्योमावदातं यदि नीलमेतन्नीलं विलोके तदिहानलोकम् ।
मन्ये त्रिकालं तदबाधदृष्टेरस्तीति पश्यामि ततस्तदस्ति ॥ १५ ॥
व्योम्नस्त्वनैल्यादिदमस्ति नैल्यं कस्येतरस्येति तु चिन्त्यमस्ति ।
मनुष्यशक्तेः परतो ह्यनन्ता अज्ञेयभावा अपरेऽपि सन्ति ॥ १६ ॥
सौरप्रकाशाद्बहिरस्त्यनन्तव्योमावगाहि प्रबलं तमस्तत् ।
अनन्तवायुस्तरदुस्तराङ्गं तमोऽथवा द्वादशयोजनोर्ध्वम् ॥ १७ ॥
अथास्तु वाऽन्यत् किमपीदमूर्ध्वं चतुर्दिशं व्यापि सुनीलवर्णम् ।
यत्वस्ति किञ्चित् तदिहावलोके न त्वेव नश्चक्षुरलीकदर्शि ॥ १८ ॥

४ समं विलं यच्च धरातलं भुवस्तत् सत्यमेवेन्द्रियदोषजं न तत् ।
दृश्यक्षितिरुन्नतपृष्ठताक्वचिद् दृष्टौ न चायाति ततो न गृह्यते ॥ १९ ॥
दृष्टिर्न नोऽत्रार्थसदेशमीयते नत्वेव सोऽर्थोऽपि च याति दृक्स्थलम् ।
तदर्थबाह्याणुविवर्तिता रवेः करास्तमर्थं घटयन्ति दृग्गताः ॥ २० ॥
दृक् प्राप्यकारिण्यपरस्य यद्यर्थदेशमित्वा कुरुतेऽर्थरूपम् ।
दृग्व्याप्यदेशस्थितवालरूपं जन्तुं च सूक्ष्मं न कुतः प्रपश्येत् ॥ २१ ॥
अर्थोऽथ चेद् दृक्स्थलमेत्य रूपं कुर्याद् गृहीतः स तमस्यपि स्यात् ।
तस्माद् रवेरेव करा इतोऽर्थात् प्रत्याहतास्तस्य दिशन्ति रूपम् ॥ २२ ॥
प्रत्याहताः सूर्यकरास्तु सूक्ष्मात् पृष्ठात् क्रमन्ते न बहुप्रदेशम् ।
न तेऽक्षिदेशं प्रभवन्ति गन्तुं ततो विदूरान्न भवन्ति दृष्टाः ॥ २३ ॥
विस्फारि वीध्रेण सुचक्षुषेक्ष्यते यावन्न तत् कच्चरमन्दचक्षुषा ।
अक्ष्णोऽपि तस्माद् विषयावगाहिताऽस्तीत्याहुरेके न तदस्ति साधुवत् ॥ २४ ॥
सा दूषिता दृक्पटली विदूरात् प्राप्तं तमर्थाकृतिभूतरश्मिम् ।
न प्रज्ञया योजयितुं समर्था क्षीणेक्षणानां न ततोऽस्ति दृष्टिः ॥ २५ ॥
अथापि वा माण्डलमस्ति दृष्टेर्यावद्बहिर्ज्योतिरि तदन्तराले ।
स्थितस्य चेद्रूपमुपैति चक्षुर्देशं तदा चाक्षुषबोधसिद्धिः ॥ २६ ॥
ते चांशवो यद्यपि वस्तुपृष्ठे निम्नोन्नता अर्थकणानुरोधात् ।
उपक्रमन्ते दृशि तूपसन्नाः समाः समक्षेत्रवशाद् भवन्ति ॥ २७ ॥

५ यत् कन्दुकं वर्तु लवृत्तमुच्चावचं गृहं वत्र्मनेकमिश्रम् ।
सहस्थमन्यान्यखदेशगं वा छाया समा भित्तिगता सदैषाम् ॥ २८ ॥
ऊर्ध्वाधरा यद्यपि सन्ति ताराग्रहास्तथाप्येकधरातले खे ।
विभान्ति तेषां च धरातलं तत् तद्रश्मिभिः स्यात् सममक्षिदेशे ॥ २९ ॥
दूर्वावृतः श्यामलभूप्रदेशो वृक्षैर्वनं भङ्गवती सरिच्च ।
दूरात् समेनैव तलेन दृष्टा भवन्ति तत्राप्ययमेव हेतुः ॥ ३० ॥

ये वस्तुतो वर्तुलपिण्डरूपाः सूर्येन्दुबिम्बास्त इमेऽक्षि दृष्टाः ।
समंविलानुन्नतपृष्ठमध्या विभान्ति तत्राप्ययमेव हेतुः ॥ ३१ ॥
समीपतः क्वापि यदुन्नतान्तः पृष्ठा इमेऽर्थाः प्रतिभान्ति तत्र ।
तत् प्रान्तसुच्छायतले विशेषात् पृष्ठोन्नतिं भावयते मनोऽस्मिन् ॥ ३२ ॥
स्पर्शेन्द्रियं वर्तुलतां पुरस्ताद् गृह्णाति चक्षुश्च मनश्च धर्मान् ।
प्रोद्बुद्धसंस्कारवशात्तु पश्चान्मनस्तथा पश्यति दृष्टिदृष्टे ॥ ३३ ॥
सन्तीन्द्रियाणि प्रतिभिन्नभावग्राहीणि गृह्णन्ति तु नान्यदर्थम् ।
स्वार्थे प्रमाणानि हि तान्यतोऽक्ष्णः पृष्ठोन्नतेरग्रहणे न दोषः ॥ ३४ ॥

६ स्यादर्पणे रश्मिविसारके क्वचिद् विसारितोऽस्मैः प्रतिबिम्बविस्तृतिः ।
तद्वत् तिरःसारि धरानिलस्तरे विसारितोऽस्रै रविबिम्बविस्तृतिः ॥ ३५ ॥
यत् पारदस्यावरणं तमोमयं तदावृतं भास्वरशुक्लमीक्ष्यते ।
रक्तं तमः शुक्लयुतेस्तथा ह्ययं भूभावृतो रक्त इवार्क ईक्ष्यते ॥ ३६ ॥

७ भूवायुसिन्धौ हि तिरःप्रवृष्टो रश्मिर्जले यष्टिरिवार्द्धविष्टा ।
वक्रीभवन् वक्रितमूलदेशे स्वोत्थं रविं दर्शयते यथार्थम् ॥ ३७ ॥

८ दृग्भेदतो दृश्यमिदं बहिर्द्विधाऽन्तरैक्यमेत्येकभुवि प्रविश्य तत् ।
दृक्छादकाभ्यां न शिखा करा दृशोरायान्ति दीपः स ततो न दृश्यते ॥ ३८ ॥

९ यद्वै बृहद्ध्रस्वमपि दूरतः क्रमात् क्षुद्रं निरीक्षे न तदक्षिगर्हणम् ।
वेदास्त्रयः सत्यमशेषवस्तुगाः क्षुद्रं बृहद्भेदवशेन जायते ॥ ३९ ॥
सर्वाणि ऋक्सामयजुःस्वरूपाणीमानि वस्तूनि विभान्ति सन्ति ।
सामानि तत्रोत्तरवृद्धिमन्ति वितायमानानि समानि चांशैः ॥ ४० ॥
यावत्सु देशेषु भवन्ति सामान्यैतेषु देशेषु तदर्थदृष्टिः ।
ऋक्स्तोम आलम्बनमस्ति साम्नामृचो यजुर्भिः सहिता इहार्थः ॥ ४१ ॥
सामानि मध्यादतिशेरते यथा ह्रसन्ति मध्यात्तु तथर्च उत्तराः ।
ह्रासक्रमे यद्यणुमात्रभूर्भवेन्नातोऽन्तसामत्रः परमर्थदर्शनम् ॥ ४२ ॥
तदित्थमारभ्य तु मध्यतः क्रमात् तदन्तसामान्तममुष्य वस्तुनः ।
ह्रासक्रमादक्षितलेऽस्ति यादृशी स्थितिस्तथार्थं भजदक्षि साधुकृत् ॥ ४३ ॥
सूर्योयमास्तां क्षितितोऽप्युरुः पुरस्तथोडुरास्तां रवितोऽप्युरुः पुरः ।
मदक्षिदेशे तु रविः स यादृशो यादृश्युडुस्तद्वदिहाक्ष्णि सज्जते ॥ ४४ ॥
समानमानाः पुरतो ममान्तरान्तरा धृताः काञ्चन यष्टयो यदि ।
या विप्रकृष्टा ह्रसिता भवन्ति ताः सूर्यांशवोऽप्यत्रभवन्ति कारणम् ॥ ४५ ॥
ज्योतिष्मतो ज्योतिरिदं स्वरूपतोनुग्राहकं किन्त्वखिलस्य भास्करः ।
रूपं परज्योतिष आदधात्यसावज्योतिषो रूपमयोग्यमक्ष्णि नः ॥ ४६ ॥
ऋग्येव रूपं तदिहास्ति यद्यपि प्रत्यर्थमेवाक्षि तु सूर्यवर्चसा ।
कृत्स्नं न गृह्णाति विनार्करश्मितस्तस्मादपि प्राहुरिनं त्रयीमयम् ॥ ४७ ॥

विस्फारितास्ते यदि दूरवीक्षणाद्युपकुर्वन्त्रैः स्फुरिहार्कोऽमयः ।
समीपतद्देशविशेषवत्कृतो विस्फारितः सोऽथ इहाव लोक्यते ॥ ४८ ॥
तेष्वेषु चक्षुःस्थितमर्थमीक्षते तदस्ति सत्यं भ्रममन्यथाऽनृतम् ।
यत्तूडुनो भास्करतोऽपि कल्प्यते महत्वमेतन्मनसाऽन्यदर्शनम् ॥ ४९ ॥

१० यद्‌द्रुमाभासयते हि सर्वं प्रकाशितं पश्यति भावमक्षि ।
स्थाणुं यदासौ पुरुषं प्रपन्नस्तमेक्षते पुंसदृशाङ्गसंस्थाम् ॥ ५० ॥
शुक्तिं यदासौ रजतं प्रपन्नस्तत्राक्षि गृह्णाति तु चाकचिक्यम् ।
सर्पं पुमांसं रजतं तु पश्चाद्धत्ते मनस्तद् व्यवसायमन्यम् ॥ ५१ ॥

११ मरुस्थलोद्भिन्नमरीचिकायां या तोयधीः सापि न दृष्टिगर्हा ।
गतागतोद्‌वृत्तकम्पितोष्मा वीचिं ययुस्तद् ग्रहणं यथार्थम् ॥ ५२ ॥
क्षुब्धांशु संघर्षणततवायुस्तरा लघुत्वादुपरि व्रजन्ति ।
तत् स्थानमायान्ति तु शीतवायुस्तरास्तरंगा अभिवायुसिन्धु ॥ ५३ ॥
जलप्रवाहेऽशु मरुत्प्रवाहे वीचिः समा तां प्रतिपद्यतेऽक्षि ।
मनश्चिराभ्यासवशात्तु नीरप्रवाहमन्वेयि न रश्मिकम्पम् ॥ ५४ ॥
यद्वाप एताः प्रथिताश्चतुर्धा ह्यम्भो मरीचिर्मर आप इत्थम् ।
सूर्यांशुगास्तत्र मरीचयः स्युः पानाद्यनर्हा इह वीचयस्ताः ॥ ५५ ॥
जले यथा स्युः प्रतिबिम्बिता द्रुमास्तथेह च क्वापि भवन्ति कर्हिचित् ।
आरस्ततस्ता हि मरीचिसंज्ञका वीचिश्च तास्वक्षि यथार्थमीक्षते ॥ ५६ ॥

१२ एकोऽयमात्मास्ति हि तच्छरीरं दिग्देशकालव्यतिरेकभिन्नम् ।
तमात्मनस्त्वेकमथान्यमन्यं शरीरतः पश्यति तद्यथार्थम् ॥ ५७ ॥

१३ न त्विन्द्रियं सर्वविधप्रतीतिप्रत्यायनादेव भवेत् प्रमाणम् ।
यत्रास्य शक्तिर्नियतास्ति तावत्यर्थे स्थितं चेद् भवति प्रमाणम् ॥ ५८ ॥
दोषात् क्वचित् प्रसवतीन्द्रियं चेत् दोषो हि तत्र प्रतिबन्धहेतुः ।
चन्द्राम्बुदाद्यावरणाद्भासेऽत्यभास्करं कः प्रतिपद्यतेऽर्कम् ॥ ५९ ॥
शंखं सितं पीतमवैति दोषान्मिथ्यात्वतिकत्वमवैति रुग्णः ।
सतोऽस्ति रोगस्य तु तत् प्रमाणं सुपीतकाचाश्रितपीतभावात् ॥ ६० ॥

## ३—मनः प्रामाण्य सिद्धिः ।

१ यथेन्द्रियं तद्वदिदं मनोपि प्रमाणमेवास्त्युपलब्धिहेतोः ।
क्वचित्तु दोषादिदमन्यथार्थं गृह्णातु गृह्णन् कथं प्रमाणम् ॥ ६१ ॥
सत्तावतो ज्ञानमिहोपलब्धिर्ज्ञातस्य सत्ताप्युपलब्धिरन्या ।
यस्योपलब्धिस्तदवैमि सत्यं सत्यं यतो युज्यति तन्न प्रमाणम् ॥ ६२ ॥
एतत् प्रमाणं व्यवहारलक्ष्यं किन्तु प्रमाणं परमार्थतोऽन्यत् ।
ज्ञानं वितन्वद्धि मनः प्रमाणं सत्ताप्यसत्तापि न तत्र हेतुः ॥ ६३ ॥

मनः प्रकाशाय नियुज्यते चेत् तत् स्यात् प्रकाशं जनयत् प्रमाणम् ।
ज्ञानं तु दुष्टं यदि दोषयोगात् प्रामाण्यमक्षुण्णममुष्य तर्हि ॥ ६४ ॥
प्रमाणमेव व्यवहारकल्पे दोषान् कुतश्चिन्मतमप्रमाणम् ।
अवग्रहे त्विन्द्रियदोषतऽस्त्यप्रमाणमोहासु मनःस्थदोषात् ॥ ६५ ॥
स्यादात्मदोषेऽवगमोऽप्रमाणं तेशामपेक्षस्य च दूषितत्वे ।
त्रयं भवेद्दूषितमन्वितत्वाज्ज्ञानं त्रिभिस्तत्कृतमप्रमाणम् ॥ ६६ ॥
दोषान्वितावग्रहमाप्य दुष्टामीहां मनो वर्तयतेऽथ दुष्टा ।
ईहात्मनि प्राप्य तनोति दुष्टं ह्यवायमित्थं परतोऽन्यथात्वम् ॥ ६७ ॥
इत्थं व्यवस्थां कुरुते प्रमाणाप्रमाणयोर्यद्व्यवहारतस्तत् ।
लोके नियुक्तं परमार्थतस्तु ज्ञानं प्रमाणं हि सदा स्वरूपात् ॥ ६८ ॥
शिशोः पशोर्ज्ञानमवग्रहादौ सामग्र्यभावात्तु भवत्यपूर्णम् ।
दोषादपूर्णं प्रतिबन्धतःस्यात् ज्ञानं तदत्राखिलमस्त्यपूर्णम् ॥ ६९ ॥
स्यादप्रमाणं यदि चेदपूर्णं तर्ह्यप्रमाणं प्रभवेत् समस्तम् ।
सर्वं ह्यपूर्णं च सदोषमेतन्नास्त्यप्रमाणं न ततोऽनृतं वा ॥ ७० ॥
अपूर्णतायामपि यावदस्ति ज्ञानं ध्रुवं तावदिह प्रमाणम् ।
अत्यल्पमप्यक्तमनल्पमम्भो मिष्टं न चेत् तन्मधुनास्त्यमिष्टम् ॥ ७१ ॥
तत् पीतशंखावगमेऽपि पीतं ह्यक्षिदिते भवति प्रमाणम् ।
निवर्तयेद्दोषमथ प्रपूर्णं ज्ञानं यथा स्यात्तदिह प्रकुर्यात् ॥ ७२ ॥
ज्ञानं च सत्तेत्युपलब्धिरूपे सा वित्तिरुक्ता स च वेद उक्तः ।
वेदाः प्रमाणं बहिरस्तु मा वा सतोऽसतो ज्ञानमिहास्ति रूपम् ॥ ७३ ॥

( इति विशिष्ट त्रिसत्योपनिषदि अप्रामाण्यवाद-
प्रतिवादो द्वितीयः खण्डः ॥ ( २ ) ॥

—:o:—

# अथ जीवजगत्सशयंवादप्रतिवादस्तृतीयः खण्डः (३)॥

## १—तत्वदर्शनसन्दर्भक्रमः।

असद्धि तत्वं किमपीदमस्मादसत् समस्तं जगदुद्बभूव।
प्रवाहि कर्म्मास्थिरमस्त्यचित् तच्चैतन्यमप्यस्ति हि कर्मरूपम्॥ १॥
इत्येक आहुः श्रमणाः परे तु प्राहुर्जगत् सर्वमिदं सदस्ति।
तन्मूलमेतद्धि भवेदतः सा प्रवाहनित्या प्रकृतिः सती स्यात्॥ २॥
द्रव्यं विशिष्टं तु गुणक्रियाभ्यां सत् तस्य सामान्यविशेषरूपा।
सत्ता तया यत् समवेतरूपं द्रव्यं ततः कार्य्यमिदं जगत् सत्॥ ३॥
वैशेषिको वाद इति द्वितीयस्तत्राचिदेवास्त्यखिलं पृथग्वत्।
गुणैस्तु बुद्ध्यादिभिरस्त्यचिद्धिर्द्रव्यं विशिष्टं खलु चेतनात्म॥ ४॥
तृतीयवादः पुनरत्र सांख्यो द्वे तत्र तत्त्वे चिदचित्स्वरूपे।
अचिज्जगद् व्यक्तमभूदचित्तोऽव्यक्तादियं चित् पुनरस्य भोक्त्री॥ ५॥
पश्यन्ति न त्वीश्वरमत्र वादे सर्वं प्रकृत्यैव जगद्विधानम्।
योगात्मकः कर्म्मविशेष एवोपास्तिर्न चेशः फलदः कृपातः॥ ६॥
वादास्त्रयस्तत्वविदां स्युरित्थं तैर्द्रष्टृभिः साधु निरूपितास्ते।
वेद्यास्तदुक्तचैव पृथक् पृथक् ते वादं चतुर्थं तु वयं वदामः॥ ७॥
अचिच्च चिच्चास्ति तथेश्वरश्च त्रितत्वमेतद् भवति त्रिसत्यम्।
अचिच्चिदीशानविशिष्टरूपं ब्रह्मास्ति तज्जं जगदप्यनन्यत्॥ ८॥
पश्याम इत्थं, तदिदं विशिष्टत्रिसत्यवादं सुनिरूपयामः।
अस्तीश्वरो नः शरणं विशेषात् तद्दर्शनायैव तु नः प्रयत्नः॥ ९॥

## २—ज्ञानौपयिकजीवसिद्धिः।

यदेतदाभाति निगूहितं तन्न शक्यते स्वानुभवैकमानात्।
संभाव्यते नैतदमूलमस्य क्वान्यत्र मूलं वद मद्विना स्यात्॥ १॥
लोके यथा वस्त्ववभासमूलप्रभा महामण्डलमूलमेषः।
सूर्य्योन्तरे तिष्ठति तद्वदत्राप्यहं जगज्ज्ञानविकाशमूलम्॥ २॥
ज्ञानं प्रकाशो रविवद् द्विधाङ्गं यत् कन्दलं ज्ञानमयं स आत्मा।
ये रश्मयोऽस्यात्मगुणः स तेभ्यो ज्ञाने विशेषाः स्युरिहेन्द्रियोत्थाः॥ ३॥
एकाश्रयत्वं तु धियां बहूनामस्यात्मनैवार्पणतोऽत्र तासाम्।
आत्मा न चेन्न स्मरणं न वाशा न प्रत्यभिज्ञादिरपि क्वचित् स्यात्॥ ४॥

दृष्टाददृष्टं ध्रियते न दृष्टौ दृष्टेः शमेऽपि स्मृतिरस्त्यदृष्टात् ।
तस्मात् पृथग् यत्र सदृष्टिजन्यः संस्कार उद्बुध्यति मे स आत्मा ॥ ५ ॥
दृष्टं श्रुतं चास्ति ममेति भिन्नौ धर्म्मौ तु यत्राभिनयत्यभेदात् ।
स दर्शनेऽपि श्रवणेऽपि साम्याद् व्याप्तोऽस्त्यधिष्ठातृतमः स आत्मा ॥ ६ ॥
केचिद्विदुर्ज्ञानमिदं न रूढं सुषुप्तिमूर्च्छादिषु तद्विलोपात् ।
ज्ञानं प्रकाशप्रकृतीदमस्यां जीवद्दशायां न कुतो विभायात् ॥ ७ ॥
तस्माद्ध्रुवं यौगिकमिन्द्रियोत्थं मन्यामहे ज्ञानमनेकमूलम् ।
अथेन्द्रियस्नायुविशिष्टयोगात् तात्कालिकं तद्भवति प्रभास्वत् ॥ ८ ॥
तैलाग्निवर्त्यादिविशिष्टयोगाद्दीपार्चिरुत्पद्य विभाति यद्वत् ।
तात्कालिकं ज्ञानमुदेति तद्वत् प्रवाहि कालेन विपद्यते तत् ॥ ९ ॥
अस्मिन् मतेऽप्यान्तरमस्ति किञ्चिद् द्रव्यं निरूढं बहिरर्थयोगात् ।
विज्ञानरूपाय तु जायते यन्मन्ये तमात्मानमयं स जीवः ॥ १० ॥
ज्ञानं द्विधा निर्विषयं निरूढं स्याद् यौगिकं वैषयिकं तदन्यत् ।
अर्थाद्ययोगे तु यदद्वयं तन्न पश्यति द्रष्टृपि मुग्धदृग्वत् ॥ ११ ॥
देहे तता लोमनखाग्रमेकं व्याप्नोति रूढं विषयावभासि ।
आत्मा समेऽर्थोपहितेन्द्रियस्पृक् स्नायुप्रसङ्गे न धियं करोति ॥ १२ ॥
बाह्यार्थयोगादनुभूतिसंज्ञं संस्कारयोगात् स्मृतिसंज्ञमित्थम् ।
ज्ञानं द्विधात्मा सृजतीह शून्यं ज्ञानं सुषुप्तावथ शून्ययोगात् ॥ १३ ॥
य एष निर्धारयते य इत्थं विचिन्तयन् संशयमातनोति ।
सोऽहं ध्रुवं कश्चिदिहास्मि सत्यं ज्ञानस्य तत्सर्वविधस्य मूलम् ॥ १४ ॥
यस्तोलयन् सत्यमसत्यमेकं निर्धारयत्यर्थमयं स आत्मा ।
नैतन्मनस्तत्क्षणिकं तदन्यश्चान्यच्च नालं प्रभवेत् तुलायाम् ॥ १५ ॥
यो निर्णयं संशयमाप्नुवन् वा तं तं च सत्यापयमान आह ।
सत्यत्वमायाति यतस्तदर्थे सत्यात्मना तिष्ठति यःस आत्मा ॥ १६ ॥
मूर्ध्नि स्तने सक्थिनि पदेऽथ पृष्ठे स्पृष्टः क्वचित् तन्मनसावधत्ते ।
सर्वैर्मनोभिस्तु य एक एवोद्बुद्धोऽखिलं भावयते स आत्मा ॥ १७ ॥
ज्ञानं न तं मां व्यतिरिच्य किञ्चिज्ज्ञानं तथैवद् व्यतिरिच्य नाहम् ।
अहं हि तज्ज्ञानमिदं समस्तं यदेतदाभाति तदस्ति सत्यम् ॥ १८ ॥

इति ज्ञानमूलाजीवसिद्धिः ।

## ३—क्रियौपयिकजीवसिद्धिः । २

नरः पशुर्वा सहसाऽऽक्रमेत स्वतः परं पश्यति निर्बलं चेत् ।
पलायते पश्यति चेद्बलिष्ठं स्वतुल्यवीर्य्यं च दृशाऽवधत्ते ॥ १९ ॥
क्रिया विधौ यच्छ्रमजन्म दुःखं ततोऽधिकं कर्म फलं सुखं चेत् ।
तदैष तत्कर्म करोति दुःखाधिक्ये तु तस्माद्विनिवर्तते सः ॥ २० ॥

इत्थ स्ववीर्यं परवीर्यमित्थं सुखस्य मात्रामपि दुःखमात्राम् ।
यस्तोलयत्याशु तुलात्मना तं मन्ये स्वमात्मानमिहास्मि सोऽहम् ॥ २१ ॥
क्वचित्पदे कण्टकविद्धमात्रः सद्यः पदं दूरयितुं नियुङ्क्ते ।
करं तदुद्धर्तुमपि प्रयुङ्क्ते सेहा यदाज्ञावशतः स आत्मा ॥ २२ ॥
वक्तुर्यतो वाचि बलं पुरस्तादुत्थाय संसज्जत एव आत्मा ।
यन्मक्षिका निष्पवने परागात् सास्याः क्रियोदेति यतः स आत्मा ॥ २३ ॥

इति क्रियामूला जीवसिद्धिः ।

## ४—अर्थौपयिकजीवसिद्धिः । ३

अग्निं च वायुं च तथेन्द्रमेतांस्त्रीनात्मनो भावयते शरीरे ।
जीवत्ययं वर्ष्माणि यावदुष्मा श्वासस्तथोन्मेष इहाक्षिण यावत् ॥ २४ ॥
अग्निं तु वैश्वानरमाह, वायुं श्वासं, तथा विद्युतमिन्द्रमाह ।
अक्ष्णोः क्वचिन्नीलहरित्प्रकाशः प्रद्योतते सूर्यवदिन्द्र एषः ॥ २५ ॥
यो विद्युतो व्यद्युतदा स एवाध्यात्मं मनश्चास्यतीव शश्वत् ॥ [ केनो प० ४।४ ]
हृत्स्थः स इन्द्रोऽक्षणि भाति भास्वान् दिव्यः स आदित्य इहोपपन्नः ॥ २६ ॥

इत्यर्थमूला जीवसिद्धिः ।

## ५—ज्ञानक्रियार्थंमूतानामिन्द्रवाय्वग्नीनां तद्भिन्नात्माश्रितत्वम्

शिरो गुहामिन्द्र उरोगुहामयं वायुर्गुहामग्निरयं तथोदरीम् ।
देहेऽधितिष्ठन् स्वपुरीमिवाखिलं देहं प्रशास्त्येष पराविरोधतः ॥ २७ ॥
भिन्नास्त्रयः सन्ति तथाप्यकस्मादेकव्ययाये त्रितयं व्यपैति ।
तस्मात् त्रयोऽप्येकगताः कचित् स्युस्तद् ब्रह्म तस्मिन् महिमान एते ॥ २८ ॥
मूर्ध्नीन्द्रमा वक्षसि वायुरग्निः कुक्षौ त्रिलोक्या हि रसास्त्रयस्ते ।
चान्द्रं चतुर्थं च मनोस्ति यस्मिन् बद्धं स आत्मा स परोऽहमस्मि ॥ २९ ॥
गुणाः परार्थास्त इमे परस्पराविरोधतः कस्यचिदात्मनः प्रभोः ।
वशे स्थिताः स्वस्वविभिन्नकर्मणा निदेशमस्यानु चरन्तिसन्ततम् ॥ ३० ॥
ज्ञानानि चेष्टा अपि धातवोऽमी त्रिभिस्त्वमीभिः कृत एष कायः ।
त इन्द्रवाय्वग्निकृता हि भावास्त्रयस्त्वमी ब्रह्मणि सन्ति बद्धाः ॥ ३१ ॥

## ६—इन्द्रवाय्वग्नीनामाश्रयस्यात्मत्वे प्रमाणश्रुतयः ।

उपनिषदि श्रावयति ब्रह्मणि निहितानिमांस्तलवकारः ।
पञ्चाक्षरेऽव्ययेऽस्मिन् ब्रह्मण्येतेऽश्रयस्त्रिविधाः ॥ ३२ ॥

(१) " ब्रह्म ह देवेभ्यो विजिग्ये ।
तस्य ह ब्रह्मणो विजये देवा अमहीयन्त—
अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति ।
तेभ्यो ह प्रादुर्बभूव ।
तन्न व्यजानन्त—किमिदं यक्षमिति ॥
अथेन्द्रमब्रुवन्—विजानीहि किमेतद् यक्षमिति ।
स तस्मिन्नेवाकाशे स्त्रियमाजगाम । सा ब्रह्मेतिहोवाच ।
ब्रह्मणो वा एतद्विजये महीयध्वमिति ।
ततो हैव विदां चकार ब्रह्मेति ।
तस्माद्वा एते देवा अतितरामिवान्यान् देवान्—
यदग्निर्वायुरिन्द्रः । ते ह्येनन्नेदिष्ठं पस्पर्शुः ।
तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् ।
स ह्येनन्नेदिष्ठं पस्पर्श । स ह्येनत् प्रथमो विदां चकार ब्रह्मेति ।
तस्यैष आदेशो यदेतद् विद्युतो व्यद्युतत् ।
यदेतद् गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं संकल्पः ॥ १ ॥

इति ॥ एतेनाग्निवाय्विन्द्रेभ्योऽतिरिक्तस्तेष्वनुस्यूतः कश्चिद् ब्रह्मपदार्थो जीवात्मेति सिद्धम् ॥ १ ॥

अपि च स एवाह——

(२) केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥
श्रोत्रस्य श्रोत्रं, मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः ।
चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥
न तत्र चक्षुर्गच्छति, न वाग् नो मनो, न विद्मो न विजानीमो यथैतदनुशि—
ष्याद्—अन्यदेव तद्—विदितादथो अविदितादधि ॥
यद् वाचाऽनभ्युदितं येन वागभ्युद्यते । यन्मनसा न मनुते येनाहुर्मनोमतम् ॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ॥
यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते " ॥ २ ॥

इति । एतेन सर्वेन्द्रियेष्वनुस्यूतः सर्वेन्द्रियप्रवर्त्तकोऽतीन्द्रियः कश्चिदर्थो जीवात्मेति सिद्धम् ॥ २ ॥

अपि चाह छान्दोग्योपनिषदि भगवान् प्रजापतिः——

" यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषः । दर्शनाय चक्षुः ॥ १ ॥
अथ यो वेद—इदं जिघ्राणीति स आत्मा । गन्धाय घ्राणम् ॥ २ ॥
अथ यो वेद—इदमभिव्याहराणीति स आत्मा । अभिव्याहाराय वाक् ॥ ३ ॥
अथ यो वेद—इदं शृणवानीति स आत्मा । श्रवणाय श्रोत्रम् ॥ ४ ॥
अथ यो वेद—इदं मन्वानीति स आत्मा । मनोऽस्य दैवं चक्षुः ।

स वा एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ।
तं वा एतं देवा आत्मानमुपासते "—इति ॥ ( छा. उ. ८ । १२ )

इत्थं चायं सर्वेन्द्रियेष्वनुस्यूतः सर्वेन्द्रियाभिमानी सर्वेन्द्रियोपलब्धविषयाभिज्ञः कश्चिदर्थो जीवात्मेति सिद्धम् ॥ ३ ॥

बृहदारण्यकश्रुतिरप्याह—

स एष इह प्रविष्ट आ लोमभ्य आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्, विश्वंभरो वा विश्वंभरकुलाये । तं न पश्यन्ति । अकृत्स्नो हि सः । प्राणन्नेव प्राणो नाम भवति । वदन् वाक् । पश्यंश्चक्षुः । शृण्वन् श्रोत्रम् । मन्वानो मनः तान्यस्यैतानि कर्म्मनामान्येव । स योऽत एकैकमुपास्ते न स वेद ॥ अकृत्स्नो ह्येषोऽत एकैकेन भवति । आत्मेत्येवोपासीत । अत्र ह्येते सर्वे एकं भवन्ति । तदेतत् पदनीयमस्य सर्वस्य, यदयमात्मा । अनेन ह्येतत् सर्वं वेद "—इति ॥

यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानु विलीयेत, न हास्योद् ग्रहणायेव स्याद् । यतो यतस्त्वाददीत—लवणमेव । एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति ॥ यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव । एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति । अविनाशी वा अरेयमात्माऽनुच्छित्तिधर्म्मा ॥ यत्रहि द्वैतमिव भवति तदितर इतरं जिघ्रति, पश्यति, शृणोत्यभिवदति, मनुते विजानाति वा । यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं जिघ्रेत् पश्येच्छृणुयादभिवदेत् मन्वीत विजानीयात् । येनेदं सर्वं विजानाति तं केन विजानीयाद्, विज्ञातारमरे केन विजानीयात् ॥ स एष नेति नेति—आत्मा अगृह्यो नहि गृह्यते, अशीर्यो नहि शीर्यते, असङ्गो नहि सज्जते, असितो न व्यथते न रिष्यति । एतावदरे खल्वमृतत्वम् "—इति ॥ ( बृहदा० २ । ४ ) ( ४ । ५ ) ( शत० १४ । ५ । ४ ( १४।७।३ ) ॥

तथा चायं सर्वेन्द्रियेष्वनुस्यूतः सर्वेन्द्रियाभिमानी कृत्स्नशरीरेऽभिव्याप्तः प्रज्ञानघनो विज्ञानघनः कश्चिदर्थो जीवात्मेति सिद्धम् ॥ ४ ॥

अत्रेदमाशङ्क्यते । जीवशरीरे तावदसंज्ञे वैश्वानरः, अन्तःसंज्ञे वैश्वानर-तैजसौ, ससंज्ञे वैश्वानरतैजसप्राज्ञा—इत्येवं त्रिविधः खलु भूतात्मा भवति । तत्र वैश्वानरोऽग्निः शरीरस्थसर्वविधभूतधातुजनकः । तैजसो वायुः शरीरगत-सर्वविधचेष्टाजनकः । प्राज्ञस्त्विन्द्रः शरीरगतसर्वविधज्ञानजनकः । एत एव त्रयोऽस्य शरीरस्याधिष्ठातारस्तन्त्रनिर्वाहकाः प्रतिपद्यन्ते । ज्ञानक्रियार्थसमुच्चय-स्यैव शरीरतया तेषां त्रयाणामेतत्त्रयाधीनत्वात् । नातोऽन्यः कश्चिदर्थो ब्रह्मनामेह दृश्यते । तस्मादग्निवाय्विन्द्रा एव संहिता एको जीवात्मेति वक्तव्यम् । यस्तु खलु —" केनेषितं पततीत्यादिना तलवकारोपनिषदि, " यत्रैतदाकाशमनु विषण्णं चक्षुरित्यादिना छान्दोग्योपनिषदि च सर्वेन्द्रियानुस्यूतत्वे नायमेक आत्मा व्याख्यातः, सोऽप्यग्निवाय्विन्द्रेष्विन्द्र एव प्रतिपत्तुं युज्यते । " इन्द्रियमिन्द्रलिङ्गमिन्द्र-दृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वेति ( ५। २। ९३ ) पाणिन्युक्तेरिन्द्रसंबन्धेनैवेन्द्रि-याणामिन्द्रियत्वोपपत्तेः सर्वेन्द्रियत्वाच्चायं मुख्यप्राण उच्यते । " न वै वाचो, न चक्षूंषि न श्रोत्राणि, न मनांसीत्याचक्षते, प्राणा इत्येवाचक्षते । प्राणोह्येवैतानि सर्वाणि भवन्ति ( ५। १ )

इति छान्दोग्यश्रुत्या सर्वेषामिन्द्रियाणां प्राणात्मकत्वाख्यानात् । प्राणेषु मुख्यत्वाच्चायमिन्द्रः कौषीतकीयोपनिषदि प्रज्ञाशब्देन श्रूयते—" सत्यं हीन्द्रः । स होवाच मामेव विजानीहि । एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात् । प्राणोऽस्मि प्रज्ञात्मा । तं मामायुरमृतमित्युपास्स्व । एकभूयं वै प्राणा भूत्वा एकैकं सर्वाण्येवैतानि प्रज्ञपयन्ति । प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति । यो वै प्राणः सा प्रज्ञा । या वा प्रज्ञा स प्राणः । सह ह्येतावस्मिन् शरीरे वसतः, सहोत्क्रमतः । तस्यैषैव दृष्टिरेतद् विज्ञानम् "—( ३. ) इत्यादिना । इयमेव प्रज्ञा सर्वेन्द्रियैष्वनुस्यूता सती मुख्यः प्राण उच्यते । स एवेन्द्रः प्रज्ञानं विज्ञानमिति चैकोऽर्थः । " तस्यैषैव दृष्टिरेतद्विज्ञानमिति कौषीतकवचनात् तस्य प्रज्ञानस्य विज्ञानात्मनैव दृश्यमानत्वाख्यानात् । पूर्वोक्तवाजिश्रुतौ विज्ञानघनप्रज्ञानघनयोरैकविध्येनाख्यानाच्च ॥ तथा चाग्निवाय्विन्द्रेष्वन्यतमोऽयमिन्द्र एव जीवात्मा निष्कृष्यते न त्वेभ्योऽतिरिक्त इति चेद्—

अत्र ब्रूमः ॥ परोरजसो रसोऽव्ययभक्तिश्चेतना । सौरो रसः एवायमिन्द्राभिधानो मुख्यः प्राणः । ऋतसत्यनेत्रया चेतनयाऽनुगृहीतोऽयमिन्द्रो नाम सौरः प्राणो विज्ञानम् । स कारयिता क्षेत्रज्ञो नामात्मा । अथ त्रिलोकी पृष्ठ्यश्चेतनयाऽनुगृहीतो ब्राह्मणस्पत्यो रसो मनः प्रज्ञा स महानित्युच्यते । तया प्रज्ञया मनसाऽनुगृहीतः स एव सौरः प्राणः प्रज्ञानम् । स कर्ता कर्मात्मा वैश्वानरतैजसप्राज्ञानां भूतात्मनामन्यतमः प्राज्ञो नामान्य आत्मा । एतमेव प्राज्ञं प्राण मन्ये सर्वे प्राणा अनुगता भवन्ति । यानिन्द्रियाणीत्याचक्षते ॥ तच्चेदमेकैकमिन्द्रियं प्रज्ञानुगृहीतप्राणमयेन प्रज्ञानात्मनाक्रान्तम् । प्रज्ञानमयीदं चेतनानुगृहीतप्राणमयेन विज्ञानात्मनाक्रान्तम् । तदित्थमेकैकमिदमिन्द्रियं चित् प्राणप्रज्ञा प्राणदेवताभिः पाङ्क्तं मनः प्राणवाचां घनमुपपद्यते ॥ चित्प्रज्ञयोर्मनस्त्वाद् देवानां च वाङ्मयत्वात् ॥ एषां त्रयाणां पञ्चानां वा समवेतैकपिण्डभूतोऽर्थो जीवात्मा ॥

तत्र न तावदिन्द्रियप्राणा मुख्यप्राणश्चैकोऽर्थः स्यात् । प्राणानामहं श्रेयस्त्वविद्यायां छान्दोग्यबृहदारण्यककौषीतकादिषु वागादिप्राणापेक्षया मुख्यप्राणस्य भेदेनाख्यानात् । एवं स्थिते छान्दोग्योपनिषदि ( ५ १ ) प्राणो ह्येवैतानि सर्वाणि भवन्तीत्येवं यदिदमभेदाख्यानं तत् तस्य मुख्यप्राणस्य सर्वेषु प्राणेष्वनुस्यूतत्वात् पृथक्त्वेनाग्रहणादौपचारिकं भाव्यम् ॥ १ ॥ एवमयं प्राणः प्रज्ञा च नैकोऽर्थः स्यात् । 'सह ह्येतौ वसतः सहोत्क्रामतः'— इत्येवं कौषीतकश्रुतौ भेदेनाख्यानात् ॥ एवं स्थिते तत्रैव —"यावै प्रज्ञा स प्राणो यः प्राणः सा प्रज्ञेत्येवं यदिदमभेदाख्यानं तदपि प्रज्ञायाः प्राणेऽनुस्यूतत्वादपृथक्त्वादौपचारिकं बोध्यम् ॥ २ ॥ अपि चेदं प्रज्ञानं विज्ञानं च नैकोऽर्थः स्यात् । वाजिश्रुतौ —"कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः । स वा एष एतावुभावन्तावनु संचरति स्वप्नान्तं च बुद्धान्तं च । अथैतस्मा अन्ताय धावति, यत्र सुप्तो न कंचन कामं कामयते, न कंचन स्वप्नं पश्यति । सोऽस्य परमो लोकः । तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपम् । तद्यथा स्त्रिया परिष्वक्त.—एवमयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् । तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम् ॥ तद्यथाऽनः सुसमाहितमुत्सर्जद् यायाद्—एवमयं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ

मुत्सृजन् याति यत्रैतदूर्ध्वोच्छ्वासी भवति"—( ४ । ३ ) इत्येवं संपरिष्वङ्गशब्देन भेदाख्यानात् ॥ एवं स्थिते प्रज्ञानघनविज्ञानघनयोर्वाजिश्रुतौ कौषीतकिश्रुतौ वा यदिद मभेदाख्यानं तत् प्रज्ञाने विज्ञानस्यानुस्यूतत्वादपृथक्त्वादौपचारिकं द्रष्टव्यम् ॥ ३ ॥ एवमपि तत्तदिन्द्रियारम्भकदेवतानां प्रतिनियतविषयग्राहित्वादिन्द्रियाणामन्योन्यभिन्नत्वेऽपि प्राणप्रज्ञाप्राणचेतनानामेकैकतयैव सर्वेन्द्रियेष्वनुस्यूतत्वमध्यवसीयते । तेन सर्वेन्द्रियोऽयमेक एवात्मा श्रुत्या व्याख्यायते ॥ * ॥

स चायमेक आत्मा इन्द्रो वातदन्यो वेति चिन्तायामुच्यते । देवतारूपाणामेषां प्राणानां मध्यवर्तिनि मुख्यप्राणे इन्द्रशब्दः । " स योऽयं मध्ये प्राणः—एष एवेन्द्रः ( ६ । १ ) इति शतपथ श्रुतेः । स चेन्द्रो दिवाप्राणः प्रकृतं मानवशरीरं द्वेधाऽभिनिविशते । मनसाऽनुगृहीतश्चेतनयाऽनुगृहीतश्च ॥ बलपूर्वरूपः क्रियोत्तररूपश्चायं सौरः प्राणः स्वतो यद्यप्यचेतन एवेष्यते तथापि चेतनानुगृहीत—ब्रह्मणस्पति रसरूपेण मनसा चेतनया चाभिव्याप्तो द्वेधा ज्ञानमयं रूपं लभते । प्रज्ञानं च विज्ञानं च । उभयोरप्यनयोश्चेतनामनसोर्ज्ञानद्रव्यत्वाविशेषेऽपि सूर्यरसस्येन्द्रस्य चेतनामात्रयोगे विज्ञानत्वं, चेतनामयसोमयोगे प्रज्ञानत्वमित्येवं भवति ज्ञानद्वय वैजात्यम् । उभयथापि ज्ञानमयो भवत्येकैक आत्मा – विज्ञानात्मा च प्रज्ञानात्मा च । तौ चैतावात्मानौ सुषुम्णैव नाड्या यद्यपीमां पृथ्वीमनुसंक्रामतस्तथाप्यत्र विज्ञानात्मा तावदयं गायत्र्या प्रणाल्या ब्राह्मणविज्ञानं सावित्र्या प्रणाल्या क्षत्रियविज्ञानं सरस्वत्या प्रणाल्या वैश्यविज्ञानं रात्रिस्थवायुसंक्रान्तया तामस्या प्रणाल्या शौद्रं विज्ञानं भूत्वा इन्द्रयोनिसंज्ञकब्रह्मरन्ध्रद्वारा प्राणिशरीरमनुप्रविशति । प्रज्ञानात्मा तु भूगर्भं प्रविष्टः पृथ्वीरसो भूत्वा प्रपद्द्वारा प्राणिशरीरमनुप्रविशति । उभयो र्हिरण्मयपुरुषत्वाविशेषेऽपि विज्ञानात्मनो हिरण्यरेतोमयत्वाद्धिरण्मयत्वमिष्यते । प्रज्ञानात्मनस्तु इरामयत्वाद्धिरण्मयत्वमैतरेयश्रुतौ व्याख्यातम् ॥ तत्रायं विज्ञानात्मा सर्वेन्द्रियाधिष्ठातरि शरीरयष्टिविधारकेऽस्मिन् प्रज्ञानात्मनि संपरिष्वक्त एव रूपं धत्ते । तमेवैतं चिदाभास इत्याचक्षते । तथा च यथास्मिन् शरीरे भूतजनको वैश्वानरोऽग्नि रेको भूतात्मा, यथा वा चेष्टा जनकस्तैजसो वायुरेको भूतात्मा, तथैवायं सर्वविध ज्ञानजनको विज्ञानात्मनाऽनुगृहीतः प्राज्ञो नामेन्द्र एवैको भूतात्मा इति शक्यं वक्तुम् । एवमप्यस्य जडस्येन्द्रस्य चेतनानुग्रहणादेव ज्ञानमयात्मत्वमुपपद्यते न स्वरूपेणेति कृत्वा चेतना ब्रह्मण एवैतद्विजयेऽग्निवाय्विन्द्राणां देवानां विजयो महिमा चाख्यायते । मनसोऽनुग्रहणेऽपि चेतनाया एवानुग्रहो निष्कृष्यते । चेतनानाक्रान्तस्य सोमस्य ज्ञानानुद्बोधकत्वात् ॥ ज्ञानेन चानुगृहीत एव प्राणः सृष्ट्यै विधृत्यै संहाराय च प्रभवतीति अग्निवाय्विन्द्रातिरिक्तस्य चेतना ब्रह्मण एवात्मत्वं निष्कृष्यते । इन्द्रियाणां मुख्यप्राण आत्मा । तस्य प्रज्ञानमात्मा । तस्य विज्ञानमात्मा । तस्यापि चिद्घनोऽयमात्मा । तथा चान्ततश्चिद्घन एवायं सर्वेषामात्मेति विद्यात् । चिदाभासः शरीरमभिनिविष्टो जीवात्मेति व्याह्रियत इति सिद्धम् ।

———

## ७–जीवस्वरूप निष्कर्षः ।

केचिद्विदुः कुर्वदिहास्ति किञ्चिद्रूपं शरीरे प्रभवः स आत्मा ॥
स्थिति-स्वभावं तु यदस्ति रूपं जगत् तदाहुर्वपुरात्मनस्तत् ॥ २९ ॥
वयं तु विद्मो नहि तिष्ठदेतत् कचास्ति कुर्वत्तु समस्तमेतत् ॥
उल्लोलवत् सर्वमिदं समन्तादनुक्षणान्यान्यतया विभाति ॥ ३० ॥
कुर्वत्सु नित्यं परिवर्तमानेष्वसत्स्वकर्म ध्रुवमस्ति किञ्चित् ।
अन्तर्निगूढं सदनंतशान्तं विज्ञानमानन्दमहं स आत्मा ॥ ३१ ॥

## ८–त्रिपुटीसंप्रत्ययैकत्वाद् ज्ञातृवद् ज्ञेयजगत्सिद्धिः ॥ १ ॥

१ एकोऽहमस्मीति यदस्ति भानं प्रत्येमि मां वेतृतया ततश्चेत् ।
वित्तिश्च वेद्यानि च नूनमेतत्संप्रत्ययादेव धृतानि तु स्युः ॥ ३२ ॥
वेत्रा च वित्या सह वेद्यवर्गैः संप्रत्ययोऽयं त्रिपुटीस्वरूपः ।
तत्रैक आत्मैव तु सत्यभूतो मिथ्येतराणीति कथं प्रतीयाम् ॥ ३३ ॥
संप्रत्ययो न त्रिविधः- स एको, मिथ्या स चेन्नात्मनि सत्यता स्यात् ।
सत्यः स चेद् वेतृवदेव वित्तिर्वेद्यानि सत्यान्यपि संभवेयुः ॥ ३४ ॥

## ९–ज्ञेयत्वसामान्याद् ज्ञातुरिव ज्ञेयजगत्सिद्धिः ॥ २ ॥

२ ज्ञातापि स ज्ञेयतयैव भाव्यो न ज्ञायते यन्न तदस्ति नाम ।
ज्ञेयेष्वहं केवलमस्ति सत्यं मिथ्येतराणीति कथं प्रतीयाम् ॥ ३५ ॥

## १०–संप्रत्ययप्रामाण्याद् ज्ञेयजगत्सिद्धिः ॥ ३ ॥

३ संप्रत्ययो विश्वमयस्वरूपः स्वतः प्रमाणं सदबाधितत्वात् ।
प्रमाणसिद्धं सकलं तु वेद्यं न चापलापाय कदापि शक्यम् ॥ ३६ ॥

## ११–जीवानन्त्यसिद्धिः ।

१ वेद्येषु पश्यामि तु मामिवान्यान् मत्तुल्यधर्म्मव्यवहारभाजः ।
मत्तश्च पार्थक्यममीषु पश्याम्यनेकजीवत्वमतः प्रपद्ये ॥ ३७ ॥
तमोरजःसत्वगुणातिरेकात् तज्जन्ममृत्युव्यतिरेकतश्च ।
मन्ये ध्रुवं ज्ञानविभिन्नमूलान्येतान्यनन्तानि वयं भवामः ॥ ३८ ॥
एकैकब्रह्माण्डनियन्तृभूताः सूर्य्या अनन्ता इह सन्ति यद्वत् ।
तत्तज्जगज्ज्ञाननिदानभूता वयं च तद्वद्बहवो विभामः ॥ ३९ ॥
यदेतदानन्त्यमहंपदार्थे नैकान्ततः प्रात्ययिकं तदस्ति ।
चैत्रस्य मैत्रस्य परस्य वा स्यात् स प्रत्ययो नो विनिगम्यते तत् ॥ ४० ॥

## १२—जगदानन्त्यसिद्धिः ।

सिद्धं तदित्थं बहवो वयं स्मो न स्वैकतन्त्र्यं विनिगन्तुमर्हम् ।
प्रत्यात्मसिद्धानि जगन्ति भिन्नान्यैकस्य चार्था न परत्र भान्ति ॥ ४१ ॥
ज्ञानं तु यन्मे प्रतिभाति तन्मे पृथग् जगन्मूलमिदं तदेकम् ।
चैत्रस्य मैत्रस्य पृथक् पृथक् तन्न मज्जगच्चैत्रधियाऽवक्लृप्तम् ॥ ४२ ॥
अनन्तजीवप्रतिपत्तिसिद्धान्येतानि नाना पृथगात्मकानि ।
जगन्ति सन्ति प्रतिपत्तिसाम्येऽप्यनेकभावेषु विशेषवन्ति ॥ ४३ ॥
पश्यन्ति भास्वन्तमिहैककाले प्रोद्यन्तमेकेऽस्तमयन्तमेके ।
मन्दप्रभं विस्तृतबिम्बमन्ये मध्याह्नगं दीप्तममल्पबिम्बम् ॥ ४४ ॥
कस्यापि चानन्दमयं जगत् स्यादबाधितोपस्थितभोग्यभाजः ।
दीनस्य तद् दुःखमयं जगत् स्यात् स्त्रीपुत्रमित्रैरपि धिक्कृतस्य ॥ ४५ ॥

## १३—सत्ताज्ञानाभ्यां जगद्द्वैविध्ये ज्ञानतो जगदानन्त्ये आक्षेपः ।

१ अत्राहुरेकेऽत्र भवन्तु तावज्जीवा अनन्ता अथ तद्धियोऽपि ।
जगत्त न ज्ञानकृतं यतस्तत् संभाव्यतेऽनन्तमिदं न तस्मात् ॥ ४६ ॥
जगद् द्विधा संभवतीह सत्ताकृतं भवेज्ज्ञानकृतं भवेद्वा ।
मन्येय सत्ताकृतमेव तच्चेन्न ज्ञानतोऽनन्तमिदं तदा स्यात् ॥ ४७ ॥
न वेद्मि तस्मादिदमस्ति किन्तु स्वतस्तदस्तीत्यहमत्र वेद्मि ।
न ज्ञाननिघ्नाऽखिलवस्तु सत्ता सत्तावशात् किन्त्विह वस्तुबुद्धिः ॥ ४८ ॥
पृथ्वीन्दुसूर्या अपि तारकास्ताः सन्ति स्वतन्त्रा न तु बुद्धिजन्याः ।
तमस्युपाघातवशात्तु वस्तु प्रत्येमि न प्रत्ययपूर्वकं तत् ॥ ४९ ॥
एकैकवस्त्वेव सहस्रशोऽन्ये द्रष्टुं सहैकत्र च शक्नुवन्ति ।
तस्मात् सहस्रप्रतिपत्तिभेदात् सहस्रवस्तूनि न सन्ति तानि ॥ ५० ॥
आत्मान्तरे वास्तु, बहिर्जगत्तद्बहिः क चाप्यस्तु, तयोर्न योगः ।
द्वयोस्तु सांमुख्यमवाप्य तत्तज्ज्ञानं स्वतः संभवतीति मन्ये ॥ ५१ ॥
योगोस्तु वात्मायमिहेन्द्रियैः स्वैर्बहिर्जगत् संस्पृशति क चेत्य ।
तदात्मनोऽर्थेन युतिः पदार्थज्ञान न चान्तर्जगदस्ति किञ्चित् ॥ ५२ ॥
अथापि वा बाह्यजगच्छरीरस्पृष्टा रवेर्दीधितयोऽक्षि गत्वा ।
प्रज्ञां स्पृशन्त्यक्षिगतां तमेव स्पर्शं जगज्ज्ञानमिति ब्रुवन्ति ॥ ५३ ॥
इत्थं बहिःस्थस्य ममेन्द्रियेण स्पर्शाद् यदि ज्ञानमिहोपपन्नम् ।
तदा वृथान्तर्जगतः प्रक्लृप्तिर्दूरे तदानन्त्यमिदं त्वपास्तम् ॥ ५४ ॥

## १४—आक्षेपनिरासः ।

२ अत्रोच्यते केवलमस्ति सत्तासिद्धं न सर्वं जगदप्रतीतेः ।
तद् भातिसिद्धं पृथगस्ति, सत्तासिद्धं पृथक् चेति जगद् द्विधास्ति ॥ ५५ ॥

सत्ताकृतं यज्जगदस्ति तच्च द्विधास्ति यन्मौलिकमेतदेकम् ।
अथापरं माण्डलिकं समन्तात् तन्मौलिकालंबितमस्त्यनन्तम् ॥ ५६ ॥
यद् दृश्यते तत् त्रितयं समुच्चितं निगीर्णभेदं जगदेकतां गतम् ।
मनोमयं प्राणमयं च वाङ्मयं शास्त्रैकदृष्ट्या तु पृथक्त्वमोद्यते ॥ ५७ ॥
तद्वाङ्मयं क्वापि हितं परोक्षवत् ततः समन्तात् प्रचरन्ति वाङ्मयाः ।
प्राणा ऋगाख्याः प्रथिता भवन्ति ते बीध्रे सदा काच इवादिण बिम्बिताः ॥ ५८ ।
अक्षिस्थबिम्बेन युतं मनो मे तद्बिम्बरूपे परिणाममेति ।
तद्रूपमदणश्चदात्मनि स्वे विधार्य्यते शीर्षणि सास्य दृष्टिः ॥ ५९ ॥
बहिर्जगद् वाङ्मयमेतदित्थं देशे बहिः क्वापिहितं ततोऽभूत् ।
अन्तर्जगन्नाम मनोमयं तच्छीर्षाक्षिदेशस्थमतोऽन्यदेतत् ॥ ६० ॥
बहिर्जगत्त्वेकमिहास्ति वाङ्मयं तदुत्थितं प्राणमयं त्वनेकवत् ।
एकात्मनि त्वेकमिदं मनोमयं ज्ञानप्रभेदात् तदनन्तमिष्यते ॥ ६१ ॥
हस्ती य एको बहिरस्ति देशे तस्मात् समानाकृतयः समन्तात् ।
सूक्ष्ममूर्तयः सूर्य्यकरप्लुता असंख्यरूपा अपि हस्तिनः स्युः ॥ ६२ ॥
यन्मौलिकान्मण्डलिकाः क्रमन्ते चक्षुःस्थले ते प्रतिबिम्बिताःस्युः ।
ते चास्तिसिद्धा अथ चक्षुषो यै मस्तिष्कगास्ते त्विह भातिसिद्धाः ॥ ६३ ॥
तदित्थमन्तर्जगदस्ति भिन्नं बहिर्जगद् भिन्नमिति द्विधा तत् ।
बहिर्जगत्तद् यदिहास्ति सिद्धं यद्भातिसिद्धं जगदान्तरं तत् ॥ ६४ ॥

## १५—प्रकारान्तरेण जगद्द्वैविध्यम्

३ अपूर्वरूपप्रतिरूपभेदाच्छिल्पं द्विधान्तर्जगतो बहिस्तत् ।
प्रणीयते चेत् तदपूर्वरूपं पूर्वं बहिस्तत्र न तादृशोऽर्थः ॥ ६५ ॥
बहिर्यथा तद्वदयं पुरोऽन्तः करोति तद्वच्च बहिः करोति ।
तदेतदुक्तं प्रतिरूपशिल्पं ततश्च सिद्धं द्विविधं जगत्तत् ॥ ६६ ॥
बहिर्जगच्च द्विविधं प्रतीमः स्वतः स्थितं जीवधिया च कॢप्तम् ।
सूर्य्येन्दुशैलप्रमुखाः स्वतःस्था गृहांश्वमत्रादि तु कृत्रिमं स्यात् ॥ ६७ ॥

## १६—बहिर्गजत्सिद्धिः ।

१ अहंप्रकाशे यदिमानि कानिचिद् विभान्ति तान्येव जगन्ति मन्महे ।
स्वतःपृथक् सन्ति मया प्रकाशितान्यथापि वा सृष्टिरियं मदुद्भवा ॥ ६८ ॥
न संशयोऽत्र क्रियतां ममैव सा सृष्टिःस्थितं विश्वमिदं जगन्मयि ।
न मद्विभिन्नं स्थलमत्र विद्यते यत्र स्थितं विश्वमिदं बहिर्भवेत् ॥ ६९ ॥
अहं हि तस्य प्रभवः प्रतिष्ठा परायणं मन्मयमेतदस्ति ।
तत्राहमेवं, मयि [2] तच्च, [3] तद्वास्म्यहं, [4] न मत्तः पृथगस्ति किञ्चित् ॥ ७० ॥

जागर्ति यो यः पृथगस्य चास्य ज्ञानादिदं भाति जगत् पृथग्वत् ।
ज्ञानाद्बहिः किन्तु जगन्न किञ्चित् संभावयामीति वदन्ति केचित् ॥ ७१ ॥
अत्रोच्यते ज्ञानमिदं स्वतन्त्रं न दृश्यते तन्न यथेच्छकारि ।
स्वतः स्थितं वस्त्वनपेक्ष्य किञ्चिन्न जायते ज्ञानमिदं कदाचित् ॥ ७२ ॥
समुद्रशैलाद्यपि वर्षपूगैरेकत्र साम्याद् बहवो वदन्ति ।
स्वाच्छन्द्यतोऽन्यान्यविधाप्रकृतौ न जीवसामर्थ्यमिह प्रतीमः ॥ ७३ ॥
न केवलं पश्यति नित्यमिष्टं सर्वत्र जीवो निजबोधमात्रः ।
भूयांस्यनिष्टान्यपि पश्यतीति प्रत्येमि मूलं पृथगस्ति किञ्चित् ॥ ७४ ॥
यत् किञ्च पश्यामि घटं पटं वा मदात्मकान्यहमेव तानि ।
किन्तु ध्रुवं तत् परिकल्पकानि सन्त्येव वस्तूनि बहिः स्थितानि ॥ ७५ ॥
स्युः प्राप्यकारीणि यदीन्द्रियाणि तर्हीन्द्रिये योगकृते बहिः स्युः ।
अप्राप्यकारीणि यदा तदापीन्द्रिये स्युराघातकृतेबहिर्वा ॥ ७६ ॥
अस्तीति तद् वेद्मि महीन्दुसूर्यं वेद्मीत्यतोऽस्तीति न साधु मन्ये ।
तस्मात् परोक्षं ध्रुवमस्ति मूलं ज्ञाने स्वतन्त्रं हि बहिर्जगत्तत् ॥ ७७ ॥
यादृग् यथा यत्र यदस्ति तादृक् संसृज्यते, नायमहं भवामि ।
यथा भवामीदमहं तथा मे ज्ञानं भवेदंश इवांशिनो मे ॥ ७८ ॥
अहं च पुत्रश्च पिता च मित्रं शत्रुश्च मे भिन्नतयाऽवभान्ति ।
केचिन्मृताः कश्चिदथो मरिष्यत्यथापि विश्वं न कदापि नश्येत् ॥ ७९ ॥
एकस्य मृत्यावथवा विमोक्षे तज्ज्ञाननाशेऽपि न विश्वनाशः ।
चैत्रे मृते मैत्रजगन्न नष्टं मृतेऽपि मैत्रे न जगद्विनश्येत् ॥ ८० ॥
स्वस्मिन् मम प्रक्षयमेति विश्वं गाढं प्रसुप्तस्य च मूर्छितस्य ।
विश्वं तथाप्यस्ति परं प्रसुप्तेऽन्यस्मिन्मम भाति यथा तथैव ॥ ८१ ॥
सामान्यतो ज्ञानमिदं यदित्थं तद्धि प्रमाणं न हि बाधमीक्षे ।
तज्जीवसम्बन्धि जगद्विभिन्नं स्वतन्त्रमेकं जगदस्ति किञ्चित् ॥ ८२ ॥

## १७—अन्तर्जगत्सिद्धिः ।

१ बहिर्जगत्त्वेव तदास्तु मास्तु स्वतोऽसदन्तर्जगदत्र किञ्चित् ।
इति प्रपद्येत यदीह कश्चित् तस्मै ब्रुवेऽन्तर्जगतोऽपि सिद्धिम् ॥ ८३ ॥
ज्ञानोपपन्नं तु जगद् यथान्यत् सत्तोपपन्नं च जगत् तथान्यत् ।
ज्ञानाङ्गभावा इह जीवनिष्ठाः सत्ताङ्गभावाश्च तथा बहिःस्थाः ॥ ८४ ॥
स्पृष्ट्वा पदार्थं प्रतिपद्यतेऽयं ज्ञानीयभावावयवास्तु तत्र ।
स्पर्शक्रमेण प्रभवन्ति भाने तद्वद्भवेच्चक्षुषि युक्तिसाम्यात् ॥ ८५ ॥
भूतं भविष्यन्तमथासदर्थं श्रुत्वा तथा व्यक्तिविशेषरूपम् ।
ज्ञानीयमन्तर्जगदेव पश्येद्बहिर्जगत् पश्यति नैव तर्हि ॥ ८६ ॥
आवक्रिता वक्रितलोचनाभ्यां द्विधा कृतं पश्यति दृश्यमेकम् ।
दृग्जं ध्रुवं तद्द्वयु भयं हि रूपं बहिर्जगत्त्वं कथयेत्तयोः कः ॥ ८७ ॥

## १८—अन्तर्बहिर्जगद्भ्यां ज्ञानोपपादनम् ।

## तत्र बाह्यार्थभागान्वितप्रत्ययमतम् ।

१ तदित्थमन्तर्जगदेव सर्वं पश्यामि किन्त्वस्ति बहिर्जगच्च ।
बहिर्जगच्चेन्न भवेत् तदानीं ज्ञानोपपत्तिर्न भवेत् कदाचित् ॥ ८८ ॥
अनन्तशक्त्यं कघनोस्म्यहं यस्तस्योऽणाः सन्ति विकाशमात्राः ।
याः शक्तयः काश्चिदवैमि तानीन्द्रियाणि तान्यस्म्यहमेक आत्मा ॥ ८६ ॥
अत्रेन्द्रिये बाह्यसदर्थयोगे द्वयोरुपादाय तयोः स्वमंशम् ।
तयोर्विकारेण भवत्यपूर्वः स प्रत्ययो रूपरसादिसंज्ञः ॥ ६० ॥
तैलस्य दोषात्तु यथा प्रदीपज्योतिः क्व चास्फीतमभास्वरं स्यात् ।
बाह्यार्थदोषान्मलिनं तथैवाज्ञानं भ्रमः संशय आविरस्ति ॥ ६१ ॥
बहिः स्थितोऽर्थोऽन्वयमेति बुद्धौ विभाति तस्माद्बहिरेवसोऽर्थः ।
एकान्ततो मत्कृत एव चेत् स्यान्नाद्धा प्रतीयेत तदा बहिर्वा ॥ ६२ ॥

## १९—बाह्यार्थघातजप्रत्ययमतम् ।

२ इत्येक आहुः पर आहुरंशद्वयं मिथोऽन्वेति न भातिसिद्ध्यै ।
स्यादन्यथा द्रष्टृपरं परायां सर्वांशनाशादिदमर्थनाशः ॥ ६३ ॥
तस्मात् करोति ध्रुवमिन्द्रियैरिमन्नाघातमेवैष बहिःस्थितोऽर्थः ।
आहन्यमानेन्द्रियमेव शुद्धं यद्रूपमायाति विभाति तन्मे ॥ ६४ ॥
तेनेन्द्रियाणां परिणामरूपास्ते प्रत्यया आत्मविकारभूताः ।
बहिष्ट्वमेतेषु विभाति यत्तन्मन्ये स्वभावात् कृतमिन्द्रियाणाम् ॥ ६५ ॥
यत्तु भ्रमोऽजायत संशयो वा न तत्र हेतुर्बहिरर्थयोगः ।
आघातवैषम्यवशात्तु तत्रेन्द्रिये विचित्रः परिणाम एषः ॥ ६६ ॥
अस्मिन्मते यद्यपि कश्चिदंशो न प्रत्ययेऽर्थस्य बहिः सतोऽस्ति ।
तथापि तादृक्परिणाममूलाघाताय कल्प्या बहिरर्थसत्ता ॥ ६७ ॥

## २०—ज्ञानोत्पत्तौ बाह्यार्थस्य हेतुत्वम् ।

३ ध्रुवं ततोऽन्तर्जगदस्ति किञ्चित् पृथक् पृथक् चास्ति बहिर्जगत्तत् ।
ताभ्यामुभाभ्यां प्रतिपत्तिसिद्धिः संभाव्यते नैकतरेण मन्ये ॥ ६८ ॥
तथा च मज्ज्ञानकराणि यानि क्वचिद्बहिर्वा स्थितिमन्ति सन्ति ।
अदृश्यरूपाण्यपि तानि मन्ये परं जगज्जीवजगद्विभिन्नम् ॥ ६६ ॥
बहिर्न यत्रास्ति घटो न तत्रेच्छतोऽपि मे तत्स्थितिबुद्धिरस्ति ।
बहिःस्थितेऽस्मिन् घटबुद्धिरुद्यान्ममेव सर्वस्य परस्य साम्यात् ॥ १०० ॥
किन्तु ध्रुवं तं न घटं बहिर्वा स्थितं प्रपश्यामि परोपि कश्चित् ।
तत्रात्मसंयोगकृतं मदात्मस्फोटं तु पश्यामि तदात्मकं तम् ॥ १०१ ॥

## २१—बाह्यार्थस्पर्शानुसारादात्मनि संस्कारः ।

४ बहिः स्वतन्त्राणि जगन्ति यावन्त्यायान्त्यहं ज्ञानधरातलेऽस्मिन् ।
तावन्ति मे भान्ति मयि स्थितत्वान्न भान्ति तु ज्ञानतलाच्च्युतानि ॥ १०२ ॥
ज्ञानस्य यावन्तमिदं प्रदेशं वस्तु स्पृशेत् तत्र च लक्ष्म तादृक् ।
प्रजायतेऽन्तर्जगदात्मनाऽसौ संस्कार उक्तः स्मरणाय हेतुः ॥ १०३ ॥
स्पर्शोऽधिकश्चेदधिकोऽस्य बोधो मन्दे तु मन्दोऽथ समे समः स्यात् ।
तत् स्पर्शवैशेष्यवशेन वस्तुज्ञाने विशेषो भवतीति मन्ये ॥ १०४ ॥
न स्पर्शयोग्योऽस्म्यहमित्थमाहुः केचित्तदज्ञानवशादसाम्यम् ।
बाह्यार्थदृष्ट्याहितसंस्क्रियाऽस्मिन् प्रत्यक्षमीक्षे मयि शिक्षयापि ॥ १०५ ॥
निर्लेप आत्मा न च सज्ज्यतेऽसौ न बध्यतेऽसौ व्यथते च नासौ ।
इत्याहुरार्य्या ध्रुवमेतदेवं तथापि नाघातविधौ विरोधः ॥ १०६ ॥
वायोर्जलस्यापि मिथः प्रसङ्गे फेनोद्भवस्तद्ग्रथनाच्च बन्धात् ।
नायं तथा वस्तुनि सज्जतेऽस्मिन् न बध्यते न व्यथते कदाचित् ॥ १०७ ॥
आहन्ति वायुर्जलमस्ति तस्माज्जले तरङ्गः कमपीह कालम् ।
न सज्जते तत्र जलं तु वायौ विद्यात्तथात्मानमिमं पृथग्वत् ॥ १०८ ॥

## २२—आत्मनि बाह्यार्थस्पर्शतारतम्यम् ।

५ युनक्त्यहंप्रत्ययकृत्स्नदेशव्याप्त्या बहिर्वस्तु न दिङ्मितत्त्वात् ।
प्रतीकमात्रे बहिरर्थपृक्तं ज्ञानं तदज्ञानवृतं ध्रुवं स्यात् ॥ १०९ ॥
इन्द्रोऽयमात्मेन्द्रियवर्गमार्गाद्वार्थवर्गं स्पृशति प्रतीकात् ।
नास्ति स्वतन्त्रो बहिरर्थयोगे तस्मादपूर्णज्ञ इहास्ति जीवः ॥ ११० ॥
स्वल्पांशतोऽर्थं प्रमितं प्रगृह्णन् सोऽज्ञानभूयिष्ठतया बिभेति ।
संभाव्यतेऽस्मिन् क्रमवृद्धबोधात् पूर्णज्ञतासंयमयोगतो वा ॥ १११ ॥
बाह्यांस्तु कामाँस्तिरयन् यदान्तर्मुखो भवामि स्वयमात्मकामः ।
सर्वज्ञतां यामि स सर्वकामः स्पृशन्नशेषान् मम शक्तिकामान् ॥ ११२ ॥
"पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ ११३ ॥
पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ ११४ ॥"

कठोपनिषत् ४ वल्ली ।

—:o:—

# अथेश्वरजगत्संशयवादप्रतिवाद-श्चतुर्थः खण्ड आरभ्यते

## १—अनन्त जीवाधारतयेश्वरसिद्धिः ।

जीवा अहं-प्रत्ययमात्ररूपाः स प्रत्ययः सर्वजगत्स्वरूपः ।
पश्यामि यावज्जगदात्मभेदात् तद् द्रष्टृ वा दर्शनमेव वाऽहम् ॥ ११५ ॥
यथाहमेकोऽस्म्यवबोधरूपः पश्यामि लोकानपरान् यथाहम् ।
ध्रुवं तथैतेऽप्यवबोधरूपाः मां चेतरांश्चानुभवन्ति मन्ये ॥ ११६ ॥
पश्यामि यद्यन्मयि तत् समस्तं मत्तः परं नेति न तत् परस्मिन् ।
जगद्धरा इत्थमनन्तजीवा यस्मिन्निविष्टाःपर ईश्वरः सः ॥ ११७ ॥
नश्यन्ति जीवाः प्रभवन्ति जीवा यत्रापि यन्ति प्रभवन्ति यस्मात् ।
तद्धाम किञ्चिद्ध्रुवमस्ति जीवास्तदाश्रयाः सन्ति स हीश्वरोऽस्ति ॥ ११८ ॥

## २—बहिर्जगदाधारतयेश्वरसिद्धिः ।

बहिर्निराधारमिदं जगद्वा साधारकं वेति विचारणीयम् ।
वीक्षे निराधारमिदं न किञ्चिन्मज्ज्ञानसाधारकमेव सर्वम् ॥ ११९ ॥
जगत्त्वसाधर्म्यवशाद्बहिर्धाऽप्याधारमावश्यकमस्य मन्ये ।
अन्तर्जगद्वत् ध्रुवमस्य न स्याज्ज्ञानादृते काप्यपरा प्रतिष्ठा ॥ १२० ॥
अन्तर्जगज्ज्ञानत एव भूत्वा तत्र प्रतिष्ठाय लिनाति तस्मिन् ।
बाह्यस्य चैवं प्रभवः प्रतिष्ठा गतिर्भवेज्ज्ञान विशेष एव ॥ १२१ ॥
ज्ञानं निराधारमिदं यथा स्वे महिम्नि तिष्ठत्यपरत्र नास्ति ।
तथा जगद्बाह्यमिदं स्थितं स्वे महिम्नि न स्वीक्रियते कुतो वा ॥ १२२ ॥
ज्ञानं यथास्माकमुदेत्यकस्मात् स्थित्वा क्वचित् प्रच्यवतेऽप्यकस्मात् ।
बहिर्जगच्च प्रभवं प्रतिष्ठा परायणं तद्वदिदं न दध्यात् ॥ १२३ ॥
अत्रोच्यते संभवतीदमेवं किन्त्वेतदन्तर्जगदस्ति सर्वम् ।
मज्ज्ञानगं तस्य बहिर्न सत्ता ज्ञानं विना नास्ति जगत् स्वतन्त्रम् ॥ १२४ ॥
ज्ञानं निराधारमिदं यदा मे तथा निराधारमिदं बहिः स्यात् ।
इत्थं जगत् कल्पयितुं न शक्यं वैधर्म्यतो ज्ञानतदर्थपङ्क्तयोः ॥ १२५ ॥
ज्ञानं निराधारमिदं समीक्षे तस्मिन् कृताधारकमेव चार्थम् ।
बहिर्ज्जगच्चार्थमयं ततस्तज्ज्ञाने कृताधारमिव ध्रुवं स्यात् ॥ १२६ ॥
यथा त्विमे जीवजगत्पदार्था जीवात्मक्लृप्ताः प्रतिभान्ति तद्वत् ।
ध्रुवं समस्तैकतमात्मक्लृप्ता अमी पदार्थाः सकला भवेयुः ॥ १२७ ॥
रामानुजः स्वप्नमयीं तु सृष्टिं वक्तीशमायाप्रभवामजैवीम् ।
भ्रान्तं तदेवा त्विह जीवमायाक्लृप्तैव तत्कर्म वशात्त्वनिष्टा ॥ १२८ ॥

देहस्य कालस्य निमित्तराशेर्यत्र व्यवस्थास्ति न चास्ति बाधः ।
तामैश्वरीं सृष्टिमिह प्रतीमो जैव्यां बहिर्भाववशाद् व्यवस्था ॥ १२९ ॥
यदात्मकृतास्त इमे पदार्था बहिः स्थिताः सन्ति यदात्मनिष्ठाः ।
सर्वात्ममूलं परमात्मसंज्ञं विश्वस्य विद्मः परमेश्वरं तम् ॥ १३० ॥
सजीवविज्ञानविभिन्नमूलो जगत्प्रवाहोऽयमनाद्यनन्तः ।
यज्ज्ञानमूलस्तदिदं समस्तज्ञानाकरज्ञानमिहेश्वरोऽस्ति ॥ १३१ ॥
बहिर्जगद्योनिरयं तदित्थं सर्वेश्वरो नाभ्युपगम्यते चेत् ।
मज्ज्ञानमात्रेण यथेच्छसृष्टा सर्वत्र सर्वार्थविधा भवेयुः ॥ १३२ ॥
तस्मात् स्वतन्त्रं पृथगस्त्यनन्तं विज्ञानमेकं तदधीनमेतत् ।
स्वतन्त्रमाद्यन्तविहीनमेकं प्रवर्तते विश्वमिदं बहिर्धा ॥ १३३ ॥
सत्तोपलब्ध्यव्यतिरेकहेतोस्तदेव विज्ञानमिदं जगत् स्यात् ।
तदेव मन्ये भगवाननन्तः स विश्वमूर्तिर्जगदीश्वरः स्यात् ॥ १३४ ॥
अशेषशक्त्यर्थघनः प्रशान्तः सत्ताघनश्चिद् घन एव तस्मात् ।
एकोऽविनाशी प्रतिपद्यतेऽर्थो विश्वाश्रयो विश्वमयः स आत्मा ॥ १३५ ॥
विश्वस्य सोऽयं प्रभवः प्रतिष्ठा परायणं तन्मयमेतदस्ति ।
जगत्ययं, तत्र, जगज्जगत्तत्, जगन्न तस्मात् पृथगस्ति किञ्चित् ॥ १३६ ॥

## ३—ईश्वरीयपरिचयः ।

स ईश्वरो न प्रतिपद्यते चेत् तैलादुदारोहणमत्र चोष्मा ।
प्रदाह शक्तिः शुचिरूपमेतान्यायन्त्यकस्मादचिरेण कस्मात् ॥ १३७ ॥
पश्यामि यावत् खमिदं भचक्राकान्तं ततोऽप्यूर्ध्वमधः समन्तात् ।
लोका अनन्ता अपि सन्ति हीत्थं सामान्यतो ज्ञानमिहेश्वरं स्यात् ॥ १३८ ॥
ग्रहा क्रमन्ते न चलन्ति तारा: स्थाने शरीरावयवा भवन्ति ।
तेजांसि यान्त्यूर्ध्वमधः पयांसि यत्तेषु सत्यं ध्रुवमीश्वरः सः ॥ १३९ ॥
जागर्ति जीवो मुहुरीहतेऽसौ प्राणाः क्रमन्ते मनसा नियुक्ताः ।
तस्मिन् सुषुप्ते तु यतो नियोगाच्चेष्टाः स्युरंशः स इहेश्वरः स्यात् ॥ १४० ॥
सर्वेऽपि जीवास्तृषिताः पयोऽनु स्वतः प्रधावन्ति तृषानिवृत्यै ।
पयस्तृषां नाशयतीति सर्वे जानन्ति तज्ज्ञानमिहेश्वरं स्यात् ॥ १४१ ॥
यत्रैव गङ्गां च हिमालयं च प्राज्ञोऽविदंस्तत्र तु वेद्मि चाहम् ।
परे च तत्रैव वदन्ति तस्मात् तदीश्वरज्ञाननिबन्धनं स्यात् ॥ १४२ ॥
यदैन्द्रियं ज्ञानमिहास्ति नस्तद् व्यक्त्यन्तरज्ञानविभिन्नरूपम् ।
भिन्नार्थमप्यर्थमभिन्नवद् यद् धत्त विभुज्ञानकृतं तदैक्यम् ॥ १४३ ॥
चिता चिदाभास उपैत्यभेदं परेश्वरज्ञानमयाश्च तेऽर्थाः ।
ज्ञानादभिन्नाः प्रतिभान्ति तस्मादर्थाः पृथक्त्वं न मिथोऽस्ति गृह्यम् ॥ १४४ ॥
घटं प्रपश्यामि घटेऽत्र रूपं रूपाश्रयाः केऽपि निरूढधर्माः ।
अस्तित्वमित्येव घटं वदामि तदैश्वरं ज्ञानमिति प्रपद्ये ॥ १४५ ॥

तत्रास्ति बुद्धिर्हि घटोपलब्धेर्न भिद्यते रूपमिमे च धर्माः ।
मज्ज्ञानग्राह्या अपि सन्ति नित्या ममेन्द्रियं यद् ग्रहणं करोति ॥ १४६ ॥
तान्येव रूपाण्यपि तांश्च धर्मांस्तेषाममीषामपि चोपलब्धीः ।
एकं महाज्ञानमहं वदामि स ईश्वरः शाश्वतिकोऽद्वितीयः ॥ १४७ ॥

## ४—प्रश्नोद्धारसूत्रम् ।

प्रश्नांस्तु यान् सृष्टिविधावकुर्वंस्तत्संभवः स्याद् यदि विश्वकर्ता ।
मनुष्यवद् विग्रहवान् मितः स्याद् यथाल्पशक्तिः प्रयतेत सृष्ट्यै ॥ १४८ ॥
विज्ञानमेवेश्वर इष्यते विभुर्नासौ जडो जाड्यहरस्वभावतः ।
यथा प्रकाशस्तपनः प्रकाशवानप्यस्त्यभेदादिव धर्म्मधर्म्मिणोः ॥ १४६ ॥
आनन्दविज्ञानतदस्तिताश्चेत्यैते त्रयोर्थाः सहिताः स आत्मा ।
अत्यर्थवैशिष्ट्यममुष्य तस्मात् संभाव्यते सच्चिदयं प्रसन्नः ॥ १५० ॥
जडोऽस्तु वा, नाऽस्ति तथापि हानिः, स एक आत्मास्ति, यदस्ति किञ्चित् ।
स चेतनः सोऽस्ति जडः स शुक्लः कृष्णो महानप्यणुरेष एव ॥ १५१ ॥
अस्तीह सृष्टिर्न तु वास्ति सृष्टिर्यदेतदेवं जगदस्ति किञ्चित् ।
स एष आत्मा स विवर्तमानोऽप्यनश्वरस्तेन स ईश्वरोऽस्ति ॥ १५२ ॥
अनाप्तकामस्य तदर्थमिच्छा प्रजायते नायमनाप्तकामः ।
इच्छानिवृत्तिश्च तदर्थसिद्धौ सिद्धार्थ आत्मा तु किमर्थमिच्छेत् ॥ १५३ ॥
यस्त्वल्पशक्तिः स हि शक्यभावादनाप्तकामः स हि जीव इच्छेत् ।
यतेत चायं कृतकृत्यतायां काले सुखं विन्दति नैवमीशः ॥ १५४ ॥
स आप्तकामः स हि सर्वकामोऽप्यकाम एव प्रतिपद्यतेऽर्थः ।
सिद्धो हि काम्यः सकलोऽस्य सोऽर्थो नायं ततः कामयते तदर्थम् ॥ १५५ ॥
यं त्वर्थसृष्टौ प्रतिपादयामः कामं तदर्थानुगमः स भाकः ।
या काचिदीहा क्वचिदस्ति सा हि प्राणाश्रया सोऽपि मनोव्यपेक्षः ॥ १५६ ॥
वृक्षाङ्कुरे याति यदूर्ध्वमेषोऽप्यादौ तथा कामयते स कामः ।
तदर्थसांमुख्यमथ प्रवृत्तिश्चेष्टेत्थमन्वर्थमयं क्रमोऽस्ति ॥ १५७ ॥

## ५—असमाधेयप्रश्नोत्तरसूत्रम् ।

१ अथासमाधेयतया तु केचित् प्रश्नाः कृतास्तत्र समाश्रयः प्राक् ।
शारीरयज्ञानुविधिप्रभेदाद् वाजिश्रुतौ गोपथके च दृष्टाः ॥ १ ॥
ते गोपथब्राह्मणके तृतीयप्रपाठके पञ्चमतो निरुक्ताः । ( ३ । ५ ६ )
एकादशे शतपथे द्वितीयप्रपाठके सप्तमकेऽपि चोक्ताः । ( ११ । २ । ७ )
स्वैदायनेनाव्यमनीषिणाऽस्य प्रश्नप्रपञ्चस्य कृतः समाधिः ।
यज्ञानुगः सोऽस्ति स यज्ञविज्ञैर्विज्ञेय इत्यप्रकृतं त्यजामि ॥ ३ ॥

अङ्गान्युपाङ्गानि मुखाकृतीनां स्युः संनिविष्टानि विभिन्नरीत्या ।
प्रस्तारभेदादिह भेदसिद्धिः कण्ठादिभेदाद् वचने च भेदः ॥ ४ ॥
सूर्यागताद्वायुत आहृतस्य व्यानेन हृत्स्थेन निसर्गतो यत् ।
सिद्धं परावर्तनमेव एतत् प्रश्वासनिश्वास विधानहेतुः ॥ ५ ॥
शारीरनिर्म्माणविचित्रतैषा प्रत्यङ्गवैचित्र्यविशेषहेतुः ।
प्रत्यर्थशक्तिर्विविधास्ति तस्या ज्ञाने विधेयोऽहरहः प्रयत्नः ॥ ६ ॥
यद्यप्यनन्ता इह शक्तयः सन्त्यज्ञेयरूपा नु तथाप्यनन्ताः ।
ज्ञेयाश्च सन्त्येव तदर्थचिन्ता कुतस्तदज्ञेयभियाऽपहेया ॥ ७ ॥
विज्ञानमात्मोन्नतिहेतुरात्मा विज्ञानरूपो हि सुखोदयोऽतः ।
विज्ञानमाराधितमल्पतोऽपि प्रतिक्षणं त्राति महाभयान्नः ॥ ८ ॥

—:०:—

# अथ साधर्म्यवैधर्म्यवादः ।

## ६—जीवेश्वरयोः समूलत्वनिर्मूलत्वाभ्यां भेदः १

१ आत्मा द्विधा व्यष्टिसमष्टिभेदाद् या व्यष्टयस्ता इह जीवशब्दाः ।
ते सन्ति सर्वे प्रतिबिम्बभूता मूलं यदेषामयमीश्वरोऽस्ति ॥ १५८ ॥

## ७—अहं-शब्दों-शब्दाभ्यां व्यपदेशभेदः २

२ ज्ञानस्य तस्येश्वरनाम्न एकस्यों शब्दतोऽस्ति व्यपदेश एवम् ।
ज्ञानानि यानि त्वथ जीवनामान्यहंपदेन व्यपदेश एषाम् ॥ १५९ ॥

## ८—क्षुद्र शरीराभिमानित्व-विश्वशरीराभिमानित्वाभ्यां भेदः ३

प्रत्यक्षमीदृयं सकलं शरीरं तदन्तरे कारणमस्य गूढम् ।
आत्मा हि स क्षुद्रतनौ स जीवः स ईश्वरो विश्वतनौ स एकः ॥ १६० ॥

## ९—चतुःकोशत्वनिष्कोशत्वाभ्यां भेदः ४ ।

४ ज्ञानस्वरूपे जगतः प्रकृप्तौ स ईश्वरो जीवगणश्च तुल्यौ ।
स्थितौ तु कोशाश्रयणेऽस्त्यपेक्षापेक्षाकृतो नाम तयोर्विशेषः ॥ १६१ ॥
यदीन्द्रियं तत्र गतार्थमात्रा मनस्तदंतश्च तदन्तरे धीः ।
तदन्तरेऽहं विहरामि सोऽयं नित्यं चतुष्कोशगतोऽहमर्थः ॥ १६२ ॥
सर्वार्थमात्रा मयि संनिविष्टा स्वल्पाधिका वास्त्यणुबीजरूपाः ।
न यस्य मात्रास्ति न तस्य बोधो दोषात् क्षयेऽप्यस्मृतिरप्रपत्तिः ॥ १६३ ॥
प्रज्ञा मनोऽर्थेन्द्रियवर्गकोशाः परस्परेणाव्यतिरिक्तरूपाः ।
एकोदयेऽन्येऽपि भवन्ति साकं कस्याप्यपाये सकला अपेयुः ॥ १६४ ॥
नात्मा पशूनामिति केचिदाहुर्न तत्र बुद्धिर्न मनोऽन्य आहुः ।
एतन्नितान्तं भ्रममात्रमेषामपेक्षयाऽल्पत्वमवश्यमस्ति ॥ १६५ ॥
अथेश्वरः कोशमपेक्षते न तं सोऽनन्तमात्रो न परैर्नियम्यते ।
न तत्र बुद्धिर्न मनो न चेन्द्रियं स्वतन्त्र एवार्थचयं सृजत्ययम् ॥ १६६ ॥

## कादाचित्कज्ञानत्व-नित्यज्ञानत्वाभ्यां भेदः ५ ।

५ ज्ञानं तु योऽत्रानुभवो विवेकोऽप्यहं गतं तन्न तदेश्वरं स्यात् ।
नार्थग्रहव्याप्तिरैश्वरेऽस्मिन् नादेयहेयौ भवतश्च पूर्णे ॥ १६७ ॥

## ११–विनाशित्वाविनाशित्वाभ्यां भेदः ६।

६ अर्थाः स्वभावात् परिवर्त्य रूपारूपाण्यथात्वे व्ययपन्ति जीवाः।
जीवास्त इत्थं क्षयिणोऽप्यनन्ता य ईश्वरः सत्वविनश्वरः स्यात् ॥ १६८ ॥

## १२–अनुक्थत्वेश्वरजन्योक्थत्वाभ्यां भेदः ७।

७ अन्तःस्थमुक्थं परितः समन्तादर्चंश्चरत्यस्य विकस्वरोऽर्कः।
अशीतिरर्कोऽस्ति तदन्नभूता त्रिवृत्स्वरूपोऽस्ति ततः स जीवः ॥ १६९ ॥
प्रकाशनाभौ हृदिध्वबिम्बो भामण्डलं तस्य समन्ततोऽस्ति।
भामण्डले भान्ति जगन्ति वेनदमादीनि तद्वत् त्रिवृदस्यहं सः ॥ १७० ॥
यत् तत्र चोक्थं तदहं स आत्मा योऽर्कोऽस्ति तज्ज्ञानमिति ब्रवीमि।
ज्ञाने तु यत्काममयं जगद्धात्यशीतिरेषाखिलमूलमुक्थम् ॥ १७१ ॥
आत्मा यथा कामयते तथाऽस्मिन्नुदेति रूपं तदमुष्य कर्म्म।
कामो जगत् काममयः स आत्मा सोऽप्येत्यकामोऽन्नमतोऽस्य सोऽस्ति ॥१७२॥
य ईश्वरो नित्यमयं सकामः स सर्वकामोऽस्य हि कोपिकामः।
धीर्नाम जीवोक्थमिहोदितं स्याज्जीवं चिदाभासमतो वदामः ॥ १७३ ॥
जीवोक्थमित्थं ध्रुवमैश्वरः स्यात् कामो न तत्संभवतीश्वरेऽस्मिन्।
तस्मादनुक्थः परमेश्वरोऽसौ सर्वज्ञ एषोऽस्ति च सर्वशक्तिः ॥ १७४ ॥
ताः शक्तयस्तस्य भवन्ति कामाः कर्म्माणि तान्यस्य जगन्ति सन्ति।
स्युःकर्म्मरूपाणि च रूपनामान्येतत्त्रयं संमिलितं जगत्स्यात् ॥ १७५ ॥

## १३–असर्वजीवग्राह्यार्थत्व-सर्वजीवग्राह्यार्थत्वाभ्यां भेदः। ८

८ सर्वेऽपि जीवा निजधीस्थमर्थं गृह्णन्ति नान्याशयदृष्टमर्थम्।
तदीश्वरज्ञानगतं तु सर्वेऽविशेषतस्तेन स जीवभिन्नः ॥ १७६ ॥

## १४–नानात्वैकत्वाभ्यां भेदः। ९

९ नाना तु जीवा व्यवहारभेदाद् यथावधेया न तथेश्वरेऽपि।
नानात्वलिङ्गं किमपि प्रपद्ये तेनेश्वरज्ञानमिदं सदैकम् ॥ १७७ ॥

## १५–त्र्यवस्थत्वैकरसत्वाभ्यां भेदः। १०

१० अचेतनं चेतनमित्थमेतज्जगद् द्विधास्तीश्वरजन्यमस्मिन्।
स्वप्ने तु जीवे द्विविधं प्रबोधे जडं सुषुप्तौ तु जगन्न किञ्चित् ॥ १७८ ॥
केचिद्विदुर्जीववदीश्वरेऽपि स्युस्ता अवस्था इति तर्कयामः।
सुषुप्तिकल्पः प्रलयोऽथसृष्टिः स्वप्नोऽस्ति जाग्रत्यथ जीवमुक्तिः ॥ १७९ ॥

## १६—ईश्वरवृत्तित्व-जीवावृत्तित्वाभ्यां भेदः । ११

११ सर्वाणि भूतानि यथात्मनि स्युः सर्वेषु भूतेषु तथा स आत्मा ।
इयं व्यवस्था परमात्मजीवात्मनोः समा स्वस्वजगन्निमित्ता ॥ १८० ॥
इयान् विशेषस्त्विह वर्तते यज्जीवात्मकॢप्तोऽखिलभूतसंघः ।
* परेश्वरेस्त्येव स पश्यतीमान् जीवात्मभूतत्त्वमुपैति नेशः ॥ १८१ ॥
यत्त्वस्ति विश्वं परमात्मकॢप्तं जीवात्मभास्यस्य तु न प्रवेशः ।
जीवात्मकॢप्ता विषयास्तु तत्रेश्वरप्रकाशे निहिता असङ्गे ॥ १८२ ॥
सिद्धान्तमाहुस्तत एव भूतान्येतानि सर्वाणि मयि स्थितानि ।
स्थितोऽस्मि भूतेषु तु तेषु नाहं मयैव सर्वाणि ततानि तानि ॥ १८३ ॥
भूतानि मत्स्थान्यपि नैव मत्स्थान्येतानि सन्त्यात्मपृथक्त्वहेतोः ।
पात्रस्थिता आप इमा न पात्रात्मनि स्थिता आत्मपृथक्त्वहेतोः ॥ १८४ ॥
वायुर्यथाकाशगतः समन्ताद् व्याप्नोति खं किन्तु न सज्जते खम् ।
तथेश्वरस्थः स हि भूतसंघः किन्त्वेषु नासज्ज्यत ईश्वरोऽयम् ॥ १८५ ॥

## १७—जीवजगदीश्वरजगतोः परस्परानुरोधः १२

१२ बहिर्जगद् यद्विधमस्ति तद्विधास्तद्योगतोऽन्तर्जगति प्रसृष्टयः ।
यद्रूपशब्देन हयेन युज्यतेऽन्तरात्मकॢप्तः स तथैव दृश्यते ॥ १८६ ॥
क्वचित्पुनर्बाह्यजगद्गतार्थगा ये ये गुणास्तैः सकलैर्न युज्यते ।
अन्यान्ययोगात्त्वपि सोऽन्यथाऽऽन्तरः प्रकल्प्यते स भ्रम एष संशयः ॥ १८७ ॥
एतद्विरुद्धं क्वचिदन्तरात्मना स्वभावतो भावविशेष ऊह्यते ।
यथा स यत्नं कुरुते यथाऽऽन्तराकारेण सोऽर्थो लभते बहिःस्थितिम् ॥ १८८ ॥
गृहं रथचक्रमममत्रमासनं कूर्चं बृसी दर्पणमेवमादिकम् ।
पूर्वं बभूवान्तरमन्तरात्मना कॢप्तः ततस्तद्बहिरुद्बभूव ह ॥ १८९ ॥
क्वचित्तु बाह्यैः परमात्मकॢप्तैः सूर्येन्दुशैलद्रुमगोहयाद्यैः ।
संयुज्य रूपाणि यथाऽन्तरात्माऽकरोत् तथा तानि बहिः करोति ॥ १९० ॥
तदित्थमन्तर्जगदानुरूप्यतो बहिर्जगद्रूपमुदेति कुत्रचित् ।
प्राधान्यतः किन्तु बहिर्जगद्विधामन्वेव चान्तर्जगतः प्रसृष्टयः ॥ १९१ ॥
यदान्तरात्मा तु बहिर्जगद्गतैरर्थैर्न युङ्क्ते स्वपितीह तर्हि सः ।
युङ्क्ते तदान्तर्जगदेव कल्पते विरम्य तस्मादपि सुष्वपित्ययम् ॥ १९२ ॥

## १८—ईश्वरजगति जीवजगतोऽनुरोधाभावः १३

१३ जीवात्ममूलं हि तदान्तरं जगज्जीवात्मनो निग्रहणे निगृह्यते ।
दीपे प्रसन्ने चलिते तिरोहिते तद्भाः प्रसीदेत् प्रचलेत् तिरोभवेत् ॥ १९३ ॥

---

* न त्वहं तेषु ते मयि ( गीता ) ॥

एकत्र दीपे विकृतेपि दीपान्तराणि सुस्थानि न विक्रियन्ते ।
एकत्र जीवे विकृते पि जीवान्तराणि सुस्थानि न विक्रियन्ते ॥ १६४ ॥
बहिर्जगत्त्वीश्वरबोधक्लृप्तं तच्च स्वमूलेश्वरशाश्वतत्वात् ।
स्थानाच्च्युतिं नैति नवोपरामं न वा मदिच्छाकृतमन्यथात्वम् ॥ १६५ ॥
तन्त्रस्य मैत्रादिविभिन्नजीवात्मनां न तत्र प्रसरोऽस्ति तस्मात् ।
सुषुप्तिमूर्छामृतिकश्मलेऽपि सुस्थेऽपि मैत्रे जगदेकरूपम् ॥ १६६ ॥

## १९—जीवेश्वरजगतां पृथक् सत्ता ।

१४ ज्ञानस्य सत्ता विषयस्य सत्ता चैका पृथक् वेति विचारणायाम् ।
मतत्रयं संभवतीति वच्मि स्फुटं तु निर्धारयितुं न शक्यम् ॥ १६७ ॥



# अथ परिशिष्टवादः पञ्चमः खण्ड आरभ्यते ।

## विषयाणां मिथ्यात्त्वादेकसत्तावादः १

२ ज्ञानं प्रकाशो विषयस्तमस्तत्तयोः कथंस्यादितरेतरत्वम् ।
विविक्तयोर्नाप्यविविक्तभावः संभाव्यते नापि तयोश्च योगः ॥ १९८ ॥
* अन्योन्यधर्मस्य परस्परस्मिन्नध्यास एवास्ति नितान्तमिथ्या ।
आ[1]ख्यात्यसत्[2]ख्यातिवद् यथार्थ[3]ख्यात्यात्म[4]संख्यातिषु सोस्ति काचित् ॥ १९९ ॥
सर्प(१)स्य रज्जोश्च मिथो विवेकाग्रहोऽयमध्यास इतिस्म केचित् ।
रज्ज्ञा(२)वसत् पन्नगधर्मधीर्वा देशा(३)न्तरीया हि मतिस्तथा वा ॥ २०० ॥
बहिः(४)स्थरज्जौ स्वमतिस्थसर्पौ बहिर्वदाभास्त आहुरेके ।
अन्यस्य धर्मस्य तदित्थमन्यत्राभासमध्यासमुशन्ति विज्ञाः ॥ २०१ ॥
अध्यासमेतं प्रवदन्त्यविद्यां तद्वैपरीत्याद् भवतीह विद्या ।
ज्ञानस्य याऽनात्मविवेकपूर्वा वस्तुस्वरूपप्रतिपत्तिरस्ति ॥ २०२ ॥
अध्यस्तसर्पस्य न रज्जुसत्ता भिन्नास्ति सत्तास्ति न तत्र सर्पः ।
अध्यस्त एवं विषयोऽत्र सत्ता नास्त्येव मिथ्या तु स मायिकत्त्वात् ॥ २०३ ॥
मायावशात् सर्वजगत्प्रवृत्तिर्मायात्त्वविद्या स्वत एव जाता ।
अत्यद्भुताऽनिर्वचनीयरूपेत्येकं मतं तन्न विशिष्य ह्यम् ॥ २०४ ॥

## २—विषयाणां ज्ञानात्मकत्वादेकसत्तावादः २

२ परे तु तत्राहुरिमेऽखिलार्था भान्तीति न ज्ञानविनाकृताः स्युः ।
ज्ञानं यतः सत्यमिमेऽपि तस्मात् सत्याः स्युरेते न कदापि मिथ्या ॥ २०५ ॥
ज्ञानं हि तेषां प्रभवः प्रतिष्ठा परायणं तेन ततो न भिन्नाः ।
ज्ञानस्य हि ज्ञानमिमे विना तैर्न ज्ञायते ज्ञानमिदं कदाचित् ॥ २०६ ॥
ज्ञानैकतायां यदनेकतेयं जगत्तदाहुः स हि तद्विवर्तः ।
अन्तर्जगद्यच्च बहिर्जगत्तज्ज्ञानाद्विभिन्नं न कदाचिदस्ति ॥ २०७ ॥
ज्ञानस्य कर्माणि ततोऽत्र रूपाण्येषां च नामानि पृथक् प्रतीमः ।
उन्मुच्य धर्मान्न कदापि धर्मी संभाव्यते तेन तदेकमस्ति ॥ २०८ ॥
कर्म्माणि यावच्च गुणाश्च यावत् द्रव्यं च तावन्न विविच्य तत् स्यात् ,
चेन्मन्यसे कर्म्मगुणांस्तु मिथ्या द्रव्यं च मिथ्या ध्रुवमेव तत्स्यात् ॥ २०९ ॥
तथैव तन्नाम च कर्म्मरूपं ज्ञानात् पृथक् नास्ति तदेकमेतत् ।
तदेकतत्वं जगदस्ति सर्वं स ईश्वरः सोऽहमिमे च सर्वे ॥ २१० ॥

---

* १ अख्यातिरध्यासः । २ असत्ख्यातिरध्यासः । ३ अन्यथाख्यातिरध्यासः । ४ आत्मख्यातिरध्यासः ५ अन्यत्रान्यधर्मावभासोऽध्यासः ।

यदत्र नानात्वमिदं तु तस्य स्वरूपमेवास्ति तदस्य कर्म्म ।
वीचिर्जले वाससि चित्रवर्णोऽन्तर्द्वैतवानद्वयवत् प्रसिद्धः ॥ २११ ॥
द्वैतं तु सत्तान्यतयैव मन्ये सत्तैकतायां बहु चैकमस्ति ।
उष्णीषवन्धाम्बरतन्तुतूलानैकयैऽपि मूर्ध्न्येक इवायमर्थः ॥ २१२ ॥
ज्ञानं हि सत्ता न तदस्ति भिन्नं ज्ञानस्य सर्वं जगदस्ति रूपम् ।
कृत्स्नस्य तस्माज्जगतोऽस्य सत्ता ज्ञानस्य सत्तैव न भिद्यते सा ॥ २१३ ॥
अपूर्वशिल्पे प्रतिरूपशिल्पे ज्ञानस्वभावो द्विविधः प्रतीतः ।
अपूर्वरूपाणि करोत्यकस्माद् गृह्णाति रूपाणि यथास्थितानि ॥ २१४ ॥
यदीश्वरज्ञानमनेन क्लृप्तं बहिर्जगत् तेन च संयुतं नः ।
ज्ञानं तथा रूपमुदेति तद्वद्भिन्नं कचित्कल्पयते स्वरूपम् ॥ २१५ ॥
तृणं यथा रूपमुपैति दुग्धं ज्ञानं तथा नैति विकारभावम् ।
यथा समुद्रे बहवस्तरङ्गा नानाविधास्तद्वदिदं जगत् स्यात् ॥ २१६ ॥
य ईश्वरो ज्ञानमयोऽस्ति तस्मिन् बहिर्जगन्तोव भवन्ति जीवाः ।
प्रत्येकजीवे च पुनर्जगत्स्यादिति द्वितीयं मतमस्ति साधु ॥ २१७ ॥

## ३—विषयाणां ज्ञानातिरिक्तत्वात् पृथक्सत्तावादः ३

१ अथापरे प्राहुरिदं यदैक्यं प्रस्तूयते साधु न तत् प्रतीमः ।
स ईश्वरो भिद्यत एव, जीवा भिन्ना, जगद्भिन्नमिति, त्रिसत्यम् ॥ २१८ ॥
ज्ञानं प्रकाशो विषयास्तमोवत् कथं तयोः संभवतीदमैक्यम् ।
ज्ञाने समाने विषया विभक्ता दृश्यन्त एते निहिताः पृथङ् नः ॥ २१९ ॥
ज्ञानं प्रमाणं तत एव सर्वं प्रमीयते तेन वदामि भिन्नान् ।
ज्ञानात्तदर्थान् प्रतिपत्तिभेदात् दृश्याद्दते द्रष्टृ न दृष्टिमेयात् ॥ २२० ॥
ज्ञानं तु कार्त्स्न्याद् यदशेषमेकं स ईश्वरो नाम पृथक् पदार्थः ।
तत्रैव जीवाश्च जगन्ति चास्थुः सत्तोभयेषां पृथगीश्वरात् स्यात् ॥ २२१ ॥
ज्ञानं यदज्ञानवृतं मलीमसं क्षुद्रं व्यवस्थोपहितं शरीरगम् ।
जीवः स मेध्यादनुपाधितः परादविग्रहादीश्वरतो विभिद्यते ॥ २२२ ॥
तत्रेश्वराख्यादथ जीवनाम्नो ज्ञानाज्जगच्चोदयते पृथग्वत् ।
न कार्त्स्न्यतः किन्तु तदेकदेशादुद्भूय तत्रास्ति विभिन्नसत्तम् ॥ २२३ ॥
नोद्भित्पयोवद्दधिदुग्धवद्वा सूत्रांशुवन्मृद्घटवच्च नो वा ।
ज्ञानाज्जगत् तच्छरवत्तु दुग्धान्मन्ये जले बुद्बुदफेनवद्वा ॥ २२४ ॥
द्वयान् विशेषस्तु विभाति फेने वियन्ति तोयानि विकुर्वते च ।
ज्ञानं तु न व्येत्य विकारि भाति प्रस्तौत्यपूर्वं जगदद्भुतं तत् ॥ २२५ ॥
बालस्य मन्येऽल्पमिवास्ति चित्तं यथाधिकं पश्यति विश्वमेषः ।
तथास्य विज्ञानमुपैति वृद्धिं न क्षीयतेऽन्तर्जगतस्तु वृद्ध्या ॥ २२६ ॥
पृथक् सदत्रात्मनि संनिविष्टं सर्वात्मना विश्वमिदं समस्तम् ।
आत्मा त्वसङ्गोऽस्ति न तेन विश्वे नासज्जते किञ्चिदपीति चित्रम् ॥ २२७ ॥

घटं तु पश्यामि यदा तदानीं घटावभासो न घटानुषक्तः ।
जपानुरागः स्फटिके विशुद्धे यथा तथा ज्ञानगतास्तदर्थाः ॥ २२८ ॥
वयं तथार्थान् परिकल्पयामो यान् भावयित्वा पृथगेव तेषाम् ।
सत्ता हि तास्ता न तु सत्तया मे ते सन्ति यत् तान् हि पृथक् स्मरामः ॥ २२९ ॥
चिज्ञातसत्ताश्रयवस्तुसत्ता चित्सत्तया भिद्यत इत्यवैमि ।
न धीः पृथक् चेत् कथमीश्वरांशं धृत्वाहमर्थान् जनयेदनेकान् ॥ २३० ॥
ज्ञानीयसत्ताऽर्थगता न चेत्स्यात् सा तर्हि तस्मिन् कुत आगतेति ।
अत्रोच्यते रूपवदत्र सत्ताऽप्याकस्मिकी संभवतीति मन्ये ॥ २३१ ॥
तैलं यदर्चिर्भवतीह तैलात्कर्म्माणि रूपाणि पृथग् भवन्ति ।
आयान्ति तानीह यतो यथा वा वियन्ति सत्तापि तथात्र भाव्या ॥ २३२ ॥
न कारणं व्येति नवीनकार्य्यं तूदेति धर्माश्च न वा भवन्ति ।
वस्तुस्वभावो हि तथा ततोऽस्मिन् न शङ्क्यमित्यस्ति मतं तृतीयम् ॥ २३३ ॥

———



# अथ ज्ञानसत्तयोः पौर्वापर्य्यमूलकोऽङ्गाङ्गिवादः ॥ ( ६ )

## ४—स्वजगत्सत्ताया ज्ञाननिघ्नत्वम् ।

१ सत्तावशादस्त्युपलब्धिरस्योपलब्धितो वोऽपलभेऽस्य सत्ताम् ।
प्रश्नस्य चैतस्य कुतः समाधिर्वाह्यान्तरद्विष्ठजगद्विधाभ्याम् ॥ २३४ ॥
अस्तीश्वरज्ञानमतोऽस्ति तज्जगत् तथास्तिमज्ज्ञानमतोऽस्ति मज्जगत् ।
सत्तोपलब्धिश्च न भिद्यते मिथः स एक आत्मोभयथा प्रवर्तते ॥ २३५ ॥
ज्ञानं ग्रहीत्रस्ति न चागृहीत्वा भवेत् प्रकाशः सततः स्वभावात् ।
ग्राह्यग्रहीत्रित्थमिदं द्विरूपं ग्राह्यत्वसामान्यमवैमि सत्ताम् ॥ २३६ ॥
यो ग्राहकः स द्विविधोस्ति जीवस्तदीश्वरश्चेति जगद्विधर्ता ।
ग्राह्यं तु सत्तामयमस्ति विश्वं ग्राह्यग्रहीत्रोरविनाकृतत्वम् ॥ २३७ ॥

## ५—जैवज्ञानस्य बाह्यसत्तानिघ्नत्वम् ।

२ किन्त्वीश्वरज्ञानमयास्तिमद्वहिर्यदास्त तस्मादुपलभ्यते जगत् ।
वहिर्न चेदस्ति घटस्तदा ममेच्छतोऽपि साक्षात् क्रियते न तद्घटः ॥ २३८ ॥
तस्माद्बाह्यवस्तुनि यास्ति सत्ता ततो मम ज्ञानमुदेति बाह्ये ।
मज्ज्ञाननिघ्नास्ति न वस्तुसत्ता सत्तावशाज्ज्ञानमुदेति मेऽस्मिन ॥ २३९ ॥

## ६—ज्ञानमयजीवस्य बाह्यसत्तानिघ्नत्वम् ।

३ अस्माकमानन्त्यवशाद्य विद्मो न ज्ञाननिघ्नैव तु वस्तुसत्ता ।
ज्ञानं यथा भासयतेऽर्थसत्तां सत्तापि गृह्णाति तथा चिदंशम् ॥ २४० ॥
जीवात्मभेदात्त यथा विभिन्नज्ञानार्थसत्ताजनका वयं स्मः ।
सन्त्येव वस्तूनि तथा चिदंशग्राहीणि तैरस्त्यहमर्थसिद्धिः ॥ २४१ ॥
तदीश्वरज्ञानगतार्थरूपं जगद् भवेज्ज्ञाननिबन्धनं तत् ।
जीवात्मकज्ञानमिदं तु कृतं तद्वैपरीत्याज्जगदर्थमूलम् ॥ २४२ ॥
न चेज्जगत् स्यान्न तदाहमाख्या जीवाश्चिदाभासमया भवेयुः ।
सूर्यस्य यद्वत् प्रतिबिम्बकृत्यै जलस्य काचस्य भवत्यपेक्षा ॥ २४३ ॥



# अथ त्रिसत्याद्वैतवादः ॥ ७ ॥

## ७–जडजीवेश्वराणां विशिष्टाद्वैतम् ।

१ इत्थं स्वरूपात् पृथगस्ति विश्वं जीवात्मकं प्राणि जगन्ति सन्ति ।
जीवा जगन्मूलतया च सन्ति प्रभुश्च तेषामयमीश्वरोऽस्ति ॥ २४४ ॥

२ जडजीवेश्वरभेदात् त्रीण्यधिकरणानि सर्वधर्माणाम् ।
आहुस्तान्यधिभूतं चाध्यात्मं चाधिदैवतं चेति ॥ २४५ ॥
जडाश्च जीवाश्च तथेश्वरश्च त्रिभिर्विशिष्टं यदिहैकरूपम् ।
तद् ब्रह्म तच्च द्विविधं परं चावरं च नातः परमस्ति किञ्चित् ॥ २४६ ॥
* अचित्तु कृत्स्नं पृथगेकमेकं सात्मास्ति जीवेन चिता प्रवेशात् ।
जीवश्च कृत्स्नः पृथगेक एकः सात्मेश्वरेणास्ति तदित्थमैक्यम् ॥ २४७ ॥
जीवस्य देहोऽस्ति जडैः कृतोऽयं जीवैः कृतो देह इहेश्वरस्य ।
जीवः शरीरे विभुरेवमीशो जीवे विभुस्तन्मय एष जीवः ॥ २४८ ॥
चिताऽचिता चोपहितोऽयमीशश्चितोऽचितश्चानिशमेक ईष्टे ।
अथो विशिष्टं तु चिताचिता चेश्वरं हि तं ब्रह्मपदेन वच्मि ॥ २४९ ॥
जीवस्य नाना प्रभवन्त्यवस्थाः स्वप्नादिका बन्धयुतोऽपि सोऽस्ति ।
अनन्तकल्याणगुणस्तुदोषैरस्पृष्ट एवेश्वर एष भाव्यः ॥ २५० ॥
क्षुधापिपासारहितो विशोको विमृत्युरेवं विजरो विपाप्मा ।
स सत्यसंकल्पकसत्यकामोऽप्यस्तीश्वरस्तत्कृपया तु जीवः ॥ २५१ ॥
जीवोऽस्वतन्त्रोऽस्य हि भुक्तिमुक्ती स्वतन्त्र एवेश्वर आतनोति ।
तदीश्वरानुग्रहतस्तु जीवोऽप्यदोषकल्याणगुणाकरः स्यात् ॥ २५२ ॥
द्रष्टा हि तत्कर्मण एष ईश्वरो यदानुगृह्णाति तदैष जीवतः ।
सर्वाणि कर्माण्यपमृज्य बन्धनादुन्मोच्य साम्यं निजमत्र पश्यति ॥ २५३ ॥
निर्दोषकल्याणगुणाकरत्वतः प्राकाम्यतः साम्यमिहास्य जायते ।
न त्वेष मुक्तो जगतः प्रसर्जनं रक्षां क्षयं चेश्वरवत् करिष्यति ॥ २५४ ॥
ब्रह्म द्विधा प्रागुदितं परं चावरं च तत्रास्त्यनिरुक्तमाद्यम् ।
अव्यक्तमव्याकृतसूक्ष्मरूपं तदस्य विश्वस्य हि बीजमस्ति ॥ २५५ ॥
स्थूलं तु यद्विश्वमिदं विभाति ब्रह्मावरं तत् परिकार्य्यमेतत् ।
इदं परस्मादुदितं परस्मिन् स्थितं परस्मिंश्च विलीयते तत् ॥ २५६ ॥
तत्रावरस्यास्ति परेण तेनाभेदस्तदेकं ह्यभवद् द्विधेदम् ।
उद्भूय तस्मात् परतोऽवरं तत् पुनः परस्मिन् भवति प्रलीनम् ॥ २५७ ॥

---

* "तस्माद्, युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् । आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे"
( भाग ११ । ७ । ६ ]
इति भागवते त्रयाणामेषां जगज्जीवेश्वराणामैक्यभावना विधीयते ।

प्रतिक्षणं तत्परतोऽवरोद्भवः परत्र चापैत्यवरं प्रतिक्षणम् ।
मध्येऽन्यथा रूपतयोद्भवः क्वचिद्विच्छिद्यते क्वापि नवं प्रवर्तते ॥ २५८ ॥
विशिष्टतोऽस्मात् परतो विशिष्टं त्वेवावरं विश्वमिदं बभूव ।
विशिष्टयोश्चास्ति तयोर्न भेदस्तस्माद् विशिष्टाद्वयमेतदाहुः ॥ २५९ ॥
विशिष्ट मेतद्द्व्यवरं परं वा सत्यैस्त्रिभिर्भिन्नतमैः स्वरूपात् ।
अचिच्चिदीशैरुदितं विशिष्टत्रिसत्यमेतत् प्रवदन्ति तस्मात् ॥ २६० ॥

## ८—जगज्जीवेश्वराणां सत्यत्वात् तद्विज्ञानस्य त्रिसत्योपनिषत्त्वम् ।

नैवं स्थिते विश्वमसत्यमेतज्ज्ञानं च सत्यं विषयाश्च सत्याः ।
ज्ञानं च जीवेश्वरभेदतः स्याद् द्विधा तयोर्विश्वमपि द्विधा स्यात् ॥ २६१ ॥
एकः स ईशो बहवस्तु जीवा एकं बहिर्धा जगदीश्वरस्य ।
अन्तर्जगन्त्यत्र बहूनि तु स्युर्नातः परं किञ्चिदिहास्ति वेद्यम् ॥ २६२ ॥
सन्नीश्वरोऽसौ जगदुच्यतेऽसज्जीवस्त्वयं स्यात् सदसत्स्वरूपः ।
वदन्ति तस्माद् भुवनं भविष्यन् भूतं च विज्ञाः सदसत्पदेन ॥ २६३ ॥
अहं हि सत्यं तदतः परेऽपिजीवा अहंत्वादविशेषसत्याः ।
यस्मान्न तेषामुपपत्तिरन्या तस्माज्जगत्सत्यमिति ब्रवीमि ॥ २६४ ॥
इत्थं जगज्जीवतदीश्वराख्यं तत्वत्रयं सत्यमिदं परीत्यम् ।
तत्रापि मुख्यः परमेश्वरोऽयं जीवाजगच्चेदमुपासतेतम् ॥ २६५ ॥
इत्थं त्रिसत्यै जगतस्तदीशितुः सत्यत्त्वमस्तीह परीक्षयेक्षितम् ।
ब्रह्माहमस्मीत्यहमर्थसत्यता त्वद्धातमां भाति ततोऽन्ययोरपि ॥ २६६ ॥
इमं त्रिसत्योपनिषद्विशेषं प्रतीत्य तस्यान्तरभेदकृत्या ।
उपासनाधर्म उपासकानां प्रवर्ततेऽनेकविधो जनेषु ॥ २६७ ॥

—०—

# ❀ अथ उपासनावादः ( ८ ) ॥

## ९—आत्मनि हृद्ग्रन्थिवशाद् बन्धप्रकारः १

१ एकत्र बिन्दौ कतिचिद्बलानीतरेतरेण ग्रथितानि चेत्स्युः ।
हृद्ग्रन्थिरेष प्रथितस्ततोऽसावात्मा रसो बद्ध इवावभाति ॥ २६८ ॥
बलानि यावन्ति भवन्ति पूर्वाण्यपूर्वमत्र ध्रियते बलं चेत् ।
प्रवर्द्धयत्यात्मनि चेद्रसं तद् ग्रन्थिं द्वितीयं तु तदा वदामः ॥ २६९ ॥
तिरः शरः कन्दुकमेवमूर्ध्वं प्रक्षिप्यते तत्र हितं बलं तत् ।
न वर्द्धयत्यत्र रसं मृदश्चेत् कावो भवेद् ग्रन्थिरसौ द्वितीयः ॥ २७० ॥
हृद्ग्रन्थिमोकेन च बन्धमोकः स्यादात्मनस्तत्र रसो निसर्गात् ।
स्वयं स बद्धः स्वयमेव मुक्तो जगत् कदाचित् स कदाचिदात्मा ॥ २७१ ॥
यदस्त्यखण्डं विभु चैकरूपं बन्धान्मितिं प्राप्य तु तत्र खण्डाः ।
यथा यथा चैव विमुक्तिमेयात् तद्ग्रन्थिभेदात् स विकासमेयात् ॥ २७२ ॥
आत्मा यदा बन्धमुपैत्यकस्माद् ग्राह्यस्तदा स्यादयमर्थसंज्ञः ।
बन्धप्रभावेण विभुः स आत्मा देहे धृतः सन् भवतीह देही ॥ २७३ ॥
अल्पज्ञतां याति शरीरबन्धादत्यन्तबन्धाज्जडतामुपैति ।
बद्धं पुनर्बन्धमुपेत्य बन्धं पुनः पुनश्चे लभते जगत्तत् ॥ २७४ ॥
मनो यदि प्राणगतिं प्रपन्नं वाक्त्वं गतं स्थूलदशामुपैति ।
तल्लीयते तेन विचित्तता स्यात् प्राणे श्लथे स्यादिह पारवश्यम् ॥ २७५ ॥
यथा यथा बन्धमुपैति तस्मिंस्तथाधिकं स्यादिह पारवश्यम् ।
यथा विमुच्येत मनो विकासात् तथा क्रमेणैष भवेत् स्वतन्त्रः ॥ २७६ ॥
प्राणादियं वाक् प्रथमे तु बन्धे वागन्यबन्धाद् भवतीह वायुः ।
वायुः पुनर्बन्धमुपेत्य तेजो बन्धाज्जलं तत् पृथिवी च बन्धात् ॥ २७७ ॥
पृथ्वी च बन्धादिह वृक्षपत्रं बन्धाच्च वन्धो मुहुरित्थमेति ।
भवेत् कथंचित् क्रममुक्तिरेषां पृथ्वी पुनः प्राणविधामुपैति ॥ २७८ ॥

## १०—बन्धमुक्त्युपायक्रियाया उपासनात्वम् २

२ जीवस्तु नात्यन्तमयं प्रबद्धः स्फुटं स विज्ञानमयोऽत्र दृष्टः ।
तथापि देहे ध्रुवमेष बद्धः प्रतीयते पाप्मनि मानयोगात् ॥ २७९ ॥
मुक्तः क्रमाद् बन्धमुपैति बद्धो विमुच्यते च स्वयमुत्क्रमेण ।
इत्थं स्वभावादिह बन्धमोक्षौ पर्यायतः संभवतो विचित्रौ ॥ २८० ॥
यया तु बन्धाद् भवतीह मुक्तो जीवः क्रियामाहुरिमामुपास्तिम् ।
उपासनातो बलवान् विमोक्षः पुनर्न बन्धः क्रमते ह्यमुष्मिन् ॥ २८१ ॥

जीवात्मकज्ञानमुपास्तियोगात् तदीश्वरज्ञानसमत्वमेति ।
बन्धस्य तस्मिन् पुनरप्रसक्तेर्न जीवतामेति स एकरूपः ॥ ८८२ ॥
इत्येवमुक्तं बलवद्रसज्ञैर्निसर्गसंभावितबन्धमुक्तेः ।
उपायभूतं सदुपास्तिकर्म्मायिवाऽत्र वद्याम्यधिकं च किञ्चित् ॥ २८३ ॥

## ११ ऐश्वरमनसि जैवमनःस्थिरीकारस्योपासनात्वम् ३

३ मनोस्ति जीवस्य तु चञ्चलं स्थिरं शान्तं नितान्तं परमेश्वरस्य तत् ।
स्थिरीकृतं वृत्तिनिरोधतो मनो जीवस्य योगं लभते परेश्वरे ॥ २८४ ॥
चक्षुः स्थिरं चेत् प्रतिबिम्बमस्थिरं न तत्र योगः प्रतिबिम्बचक्षुषोः ।
स्थिरीकृतःस्यात् प्रतिबिम्बएव चेत् सांनिध्यमायाति स चक्षुषि स्वयम् ॥ २८५ ॥
वदन्ति योगं तमुपासनां मनः सांनिध्यमायाति हि जैवमैश्वरे ।
तत्संयमादीश्वरशक्तिरञ्जसा जैवे समायाति ततोऽष्टसिद्धयः ॥ २८६ ॥
यो येन योगं लभते ध्रुवं तयोरूने भवेत् पुष्कलधर्मसंक्रमः ।
उपास्यशक्तिर्ध्रुवमत्र संचरत्युपासके साधु सचेदुपास्यते ॥ २८७ ॥

## १२—क्रिया-भक्ति-ज्ञानयोगाः ४

४ योगास्त्रिधा कर्ममुखेन, भक्त्या, ज्ञानेन कर्मास्ति महत्त्वहेतुः ।
भक्तिः सुखाधाथ तृतीयमेषां जीवस्य तस्यैश्वरसाम्यहेतुः ॥ २८८ ॥
न स्वार्थमिच्छन् न परार्थमिच्छन् निष्कारणं यद्विदधाति कर्म ।
* सामान्यतः सर्वजनस्य यत् स्याद्धितावहं नाम स कर्मयोगः ॥ २८९ ॥
एकान्ततः स्वार्थमिहानपेक्ष्य प्रस्तौति यद्विश्वजनीनकर्म ।
समृद्धिमायाति हि तेन विश्वं सोपासना सिद्ध्यति विश्वमूर्तेः ॥ २९० ॥
यो मन्त्रयोगो लययोग एवामनस्कयोगो हठयोग एवम् ।
यो राजयोगश्च त एव योगाः सर्वे प्रसिध्यन्ति हि भक्तियोगाः ॥ २९१ ॥

## १३ आत्मार्पणरूपा प्रपत्तिर्भक्तियोगः ५

५ प्रपत्तिरेषात्मसमर्पणं यन्महेश्वरायैव करोति जीवः ।
युङ्क्ते स्वमंशं परतः परं वा स्वस्मिन् द्विधात्मार्पणमित्थमस्ति ॥ २९२ ॥
उपासना सा यदि जीवतन्त्रं जीवोऽर्पयेदीश्वरतन्त्रमध्ये ।
प्रजापतेः शिल्पमयं स्वशिल्पैः संसृज्य संस्कृत्य करोति ऋद्धम् ॥ २९३ ॥
वनोदयः प्राकृतधर्म ऐशो तन्त्रे निविष्टः स हि शिल्पयोगात् ।
आरामतामेति तदित्थमैशो स्वबुद्धियोगोऽस्ति स भक्तियोगः ॥ १९४ ॥

---

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः इति योगसूत्रविरोधादप्रामाण्यं तु नाशङ्क्याम् अस्यार्थस्येश्वरप्रणिधानरूपत्वात् । अतएवाह 'एकान्तत'-इति ॥

अपूर्वभावे यदि जीवबुद्ध्या कृते निवेश्येश्वरभावभेदम् ।
अपूर्वमर्थं विदधद्वहिर्धा पुष्णाति विश्वं स च भक्तियोगः ॥ २९५ ॥
जीवस्थभावोऽस्य बहिर्जगत् तन्मृद्ग्रावतूलादिभिरैशभावैः ।
भक्त्या युतं बाह्यजगद्गतं स्यात् वासोगृहाद्यं स हि भक्तियोगः ॥ २९६ ॥
जीवो य आत्मानमपूर्वभावस्वरूपमैशेऽर्पयतीह भावे ।
तेनायमात्मा परमेश्वरस्थो भक्त्या भवेत् तेन स भक्तियोगः ॥ २९७ ॥

## १४—अपरा भक्तिः प्रेम्णा, परा भक्तिः श्रद्धया ६

उपासनं तद् द्विविधं प्रपद्येऽवरं परं चेति मनोविशेषात् ।
स प्रेम यत्रास्ति मनोऽवरं तत् परं तु स श्रद्धमनः कृतं स्यात् ॥ २९८ ॥
रजोऽनुयोगान्मनसि स्वतः स्यात् प्रेमा, व्यपाश्रित्य गुणांस्तु सोऽस्ति ।
प्रेमा गुणानीक्षत एव तांस्तानत्यल्पमात्मानममुं स पश्येत् ॥ २९९ ॥
गुणाननेकान् युगपन्न शक्तो द्रष्टुं ततस्तन्मनसि ध्रुवं स्यात् ।
त्यागग्रहात्यन्तिककर्मयोगौ नैकान्तता स्यादवरं ततस्तत् ॥ ३०० ॥
नानागुणप्रत्ययतश्च तत्र क्षिप्तं मनस्तत्र न योगसिद्धिः ।
उपास्यमात्मेतरतश्च पश्यन्नास्मिन् गतः स्यादवरं ततस्तत् ॥ ३०१ ॥
प्रेमा मनोबन्धनहेतुरस्मान्नाद्वैतसंपत् परदेवतायाम् ।
आनन्दमत्रानुभवत्ययं नानन्दः स्वयं स्यादवरं ततस्तत् ॥ ३०२ ॥
दृष्ट्वा गुणानेव गुणाश्रये यदि स्थितिं दृढामेति मनोऽथ तत्र चेत् ।
दोषान् गुणान् वा न परं व्यपेक्षते श्रद्धा तदा सास्ति मनोऽत्र तन्मयम् ॥ ३०३ ॥
प्रेमा यदैति स्वयमातिशय्यं श्रद्धा तदा रूपमुदेति भिन्नम् ।
तद्रूपवत् तत्र मनः स्थितं स्यान्न प्रेमवत् तत्र मनोऽस्ति बद्धम् ॥ ३०४ ॥
ध्वस्तत्यमाहुर्विषयास्तितायां अबाधितायां ग्रहणं दृढं चेत् ।
तदन्यथात्वग्रहणातिरेकाच्छ्रद्धानमुक्तं मनसः प्रतिष्ठा ॥ ३०५ ॥
श्रद्धेश्वरे प्रत्ययसंप्रवाहतश्चिरं स्थिरं भाति निरन्तरं यदि ।
श्रद्धा तदा स्याद् दृढभूमिरित्यतो महामहिम्नोऽल्पमहिम्नि संप्लवः ॥ ३०६ ॥

## १५—श्रद्धोपासनोदाहरणम् ७

यो नीलिमा व्योम्नि तमन्धकारं ह्युपासते वायुघनं तु केचित् ।
उपास्महे कृष्णकरप्रसारं चिदात्मनो ज्ञानमयं वयं तु ॥ ३०७ ॥
उपासते केऽपि समस्तमेतज्जगद्धि दुःखं क्षणिकं च शून्यम् ।
उपास्महे किन्तु समग्रमेवानन्दात्मकं शाश्वतिकं स पूर्णम् ॥ ३०८ ॥

## १६—श्रद्धोपासनायाःसमानप्रत्ययप्रवाहरूपत्वम् । ८

८ आत्मा मनश्चेन्द्रियवर्ग एषां योगेन यज्ज्ञानमुदेति तत्र ।
प्रमेयरूपो भवति प्रमाता तं प्रत्ययं वैषयिकं प्रतीमः ॥ ३०६ ॥
स प्रत्ययश्चेत् क्रियते समानप्रवाह एवं यदि तत्र धत्ते ।
श्रद्धामनारोपकृतामनन्यामभ्यासतस्तर्हि मनस्तथा स्यात् ॥ ३१० ॥
मनो भवेत् यद्विषयस्वरू ं तस्यात्मनोऽप्यत्र तथा स्थितिः स्यात्॥।
१ श्रद्धामयोऽयं पुरुषोऽस्ति तस्माद् यच्छ्रद्ध एषोऽस्ति स एव सोऽस्ति ॥ ३११ ॥
२ उपासनं नाम समप्रवाहः संप्रत्ययो निश्चलवृत्तिरूपः ।
३ तस्माच्छ्रुतिः प्राह यथा यथा तं ह्युपासते तन्नु भवन्ति हीति ॥ ३१२ ॥

## १७—ज्ञानयोगस्वरूपम् । ९

९ ये ये पदार्था जगति प्रसिद्धाः प्रत्यर्थमेषां पृथगस्ति विद्या ।
विद्या जगत् तत् परमेश्वरस्थं तत्प्रेत्य साक्षात् कुरुते परेशम् ॥ ३१३ ॥
अर्था हि यावन्त इमेऽखिलानां विद्याः पृथङ् नावगमाय शक्याः ।
आत्मानमेव स्वमतः प्रविद्यादेकं स कृत्स्नाणुजगन्मयोऽर्थः ॥ ३१४ ॥
आत्मानमेकं यदि कोऽपि विद्याद् यथार्थतः सर्वजगत् स विद्यात् ।
साक्षात्कृतस्तेन महेश्वरः स्यात् स एक भूतोऽत्र परात्मनि स्यात् ॥ ३१५ ॥

## १८—उपासनोपयोगः । १०

१० उपासनैषा त्रिविधोपदिष्टाऽवरात्मनः स्यात् परमात्मयोगः ।
सर्वत्र धर्मस्य हि तस्य लाभः स्वल्पोऽपि रक्षेन्महतो भयान्नः ॥ ३१६ ॥
नोपासना काचिदिहास्ति तादृशी जीवस्य यत्रात्मबलं न वर्द्धते ।
उपास्य दुःखी यदि दुर्बलस्तदा विधिच्युतेः सास्त्यकृतेति भाव्यताम् ॥ ३१७ ॥

## इत्युपासनावादः ८ ॥

इति तृतीयकाण्डे विशिष्टाद्वैत-विज्ञानं नाम प्रथमं पर्व समाप्तम् ॥
( विशिष्टत्रिसत्योपनिषत् )

——:०:——

१ श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः,,— इति भगवद्गीता
२ उपासनं नाम समानप्रत्ययप्रवाहकरणम् ,,—इति शाङ्करभाष्यम् ( ४ । १ । ७ ) ॥
३ तं यथायथोपासते तदेव भवन्ति,,—इति छान्दोग्योपनिषत् ।

# अथ ईश्वरैकसत्योपनिषत् द्वितीयं पर्व ॥

## तत्रादौ त्रिपुटीतादात्म्यम् ।

### १--जगज्जीवेश्वराणां त्रित्वनिरासः ॥

१ इत्थं त्रिसत्यं प्रवदन्ति सन्तःसन्तोषमायान्ति तु तत्र नान्तः ।
परे महान्तः प्रतिजानते ते सत्यं हि संभाव्यत एकमेव ॥ १ ॥
अस्तीश्वरस्तज्जगदस्ति नित्यं जीवाश्च तेषां च जगन्ति सान्त ।
इत्थं त्रिसत्याः प्रविदन्ति तत्र भ्रमस्त्रिधास्त्वं तदसत्यमस्ति ॥ २ ॥
ज्ञानात् पृथग् ज्ञेयकुलं तदित्थं प्राहुस्त्रिसत्या न तथा तु विज्ञः ।
ज्ञानादभिन्नः खलु तद्विवर्तः स ज्ञेयवर्गो न पृथक्पदार्थः ॥ ३ ॥

### २--प्रमाणस्येश्वरतन्त्रत्वम् ।

२ विभाति हि ज्ञानमिदं चतुर्भिर्भागैः प्रमाता प्रमितिः प्रमाणम् ।
प्रमेयमेतेषु च मातुरेव प्रमाणभिन्नत्रयमस्ति रूपम् ॥ ४ ॥
अहं प्रमाता प्रमितिस्तदंशुव्याप्तप्रकाशो बहिरर्थपृक्तः ।
यया प्रणाल्यांशुरयं बहिर्धा याति प्रमासाधनमिन्द्रियं तत् ॥ ५ ॥
एकोऽपि यद्रूपरसादिभिन्नाऽऽत्मना स निष्पद्यत आत्मरश्मिः ।
भिन्नेन्द्रियद्वारवशात् तदाहुस्तदिन्द्रियं भिद्यत आत्मरश्मेः ॥ ६ ॥
जीवात्मतन्त्रेतरदिन्द्रियं यद्रूपादि भिन्नप्रतिपत्तिमूलम् ।
बाह्यार्थवत् स्यात्तदपीश्वरीयज्ञानोद्भवं वस्तु न जीवक्लृप्तम् ॥ ७ ॥

### ३--प्रमितेः प्रमात्रा भेदाभावः ।

३ अथ प्रमाता प्रमितिः प्रमेयं जीवात्मक्लृप्तं त्रयमत्र रूपम् ।
तत्र प्रमातुः प्रमितिर्न तावत् प्रभिद्यते बिम्बविकाशरूपा ॥ ८ ॥
ज्ञानं प्रकाशो ध्रुवमेकनाभेरुत्थाय सर्वा दिशमभ्युपैति ।
ज्योतिर्घनो नाभिगतः स आत्मा ज्ञाता ततो ज्ञानमयं प्रकाशः ॥ ९ ॥
ज्योतिर्घनाज्ज्योतिरिदं पृथग्वत् प्रतीतमप्यस्ति न तद्विभिन्नम् ।
स्वं मण्डलं बाह्यमथान्तरं च द्विधा विभज्य प्रतितिष्ठतीदम् ॥ १०

### २--अन्तर्बहिर्भेदात् प्रमेयस्य प्रमात्रा भेदाभेदौ ।

४ ज्ञाने तु यद्भाति जगत् तदुक्तं तत्र द्विधा संप्रतिपत्तिरस्ति ।
यदस्ति किञ्चिद्बहिरर्थरूपं तदेव मज्ज्ञानगृहीतमस्ति ॥ ११

यद्वाऽन्यदस्त्यन्यदिदं विभाति बहिर्जगद्वीश्वरकॢप्तमस्ति ।
न तत् प्रपश्यामि न तन्ममैतज्ज्ञाने प्रवेशं क्षमते गुरुत्वात् ॥ १२ ॥

# ५ अथ जीवान्तर्जगतोरैक्यम् ।

५ जपानुरागः स्फटिके विशुद्धे यथा तथा ज्ञानगतास्तदर्थाः ।
इत्थं वदन्तीति वदन्तु किन्तु ब्रूमो वयं नात्मपृथग् जगत्तत् ॥ १३ ॥
यदत्र पश्यामि किमप्यवैमि तदस्ति सर्वं मम बोधकॢप्तम् ।
आत्मैव तद्रूपमगात् कथं स्वं स्वस्मिन् गतं स्यात् तदभिन्नमेतत् ॥ १४ ॥
बहिः स्थितार्थेन यदैष जीवात्मरश्मिरायाति कदापि योगम् ।
स तत्परिच्छेदमवाप्य सद्यस्तादृक् स्वरूपं प्रतिपद्य भाति ॥ १५ ॥
ज्ञानं गिरिर्ज्ञानमिमे च वृक्षा ज्ञानं तदन्तर्विवराणि कक्षाः ।
ज्ञानं तदूर्ध्वं तदधस्तदग्रं यज्ज्ञायते ज्ञानमिदं समग्रम् ॥ १६ ॥

# ६ अथ ज्ञानज्ञेयसंबन्धनिर्धारणम् ।

## ( ज्ञेयस्य ज्ञानस्वरूपत्वम् )

६ तत्रापि च त्रैधमिदं प्रसक्तं ज्ञानात् पृथक्सत्त्तया प्रजज्ञे ।
ज्ञेयं पिता पुत्रवदुद्धृतं वा तदेकसत्त्वं दधिदुग्धवद्वा ॥ १७ ॥
तद्भिन्नसत्त्वं तदभिन्नसत्त्वं क्षीरं यथा वा शरफेनयुक्तम् ।
एषां तृतीये मम संप्रपत्तिर्ज्ञानस्थितज्ञेयविशप्रतीतेः ॥ १८ ॥
तत्रापि च द्वैधमिदं यदुक्तं तद्भिन्नसत्त्वं तदभिन्नसत्त्वम् ।
अंशप्रभेदात्तु पृथक् तदूह्यं वित्यंशमात्रं हि बभूव वेद्यम् ॥ १६ ॥
अभिन्नसत्त्वं हि तदंशमात्रं तत्रापि च द्वैधमनुब्रवन्ति ।
जात्यन्तरं बोध्यमुदेति बोधाद् यद्वाऽखिलं बोध्यमयं स बोधः ॥ २० ॥
ज्ञाने पृथक्सत्त्तयाऽऽहितं तज्ज्ञानातिरेके जगदस्त्यसत्यम् ।
ज्ञानस्य रूपं हि तदात्मलाभो ज्ञानातिरेकेण पृथङ्ङ न तेषाम् ॥ २१ ॥
सत्यं यदि स्याज्जगदेकरूपं सदावतिष्ठेत न चान्तरस्य ।
भेदा भवेयुः स्वगता न वैषां बोधादबोधो भवतामभावः ॥ २२ ॥
ज्ञानं तु सत्यं जगतः स आत्मा दिग्देशकालैस्तु न मीयते सः ।
अस्यानवच्छिन्नतयाऽऽत्मनोऽर्थास्तादात्म्यभूताः प्रतिभान्ति बोधे ॥ २३ ॥
ज्ञानं स्थितं निर्विकृतं विकारेष्वसत्सु सत्स्वेषु सदैकरूपम् ।
ज्ञानं हि सत्यं तदसत्यमस्मिन् स्थितं ततः सत्यवदेव भाति ॥ २४ ॥
इत्थं यदन्तर्जगदस्ति तन्मे ज्ञानं तदेवाहमिति प्रसिद्धम् ।
ज्ञानं हि मद्रूपमथास्य विश्वं मज्ज्ञानरूपं तदभिन्नमेकम् ॥ २५ ॥

## ७ ज्ञेयस्य ज्ञानरूपत्वे आक्षेपः ।

७ अत्राहुरेके किल संभवेदिदं नेदयेत यद्यर्थगणस्वन्त्रता ।
यद्यात्मनि द्रष्टरि दृश्यसंनिधावसंनिधौ वा न विशेष उद्भवेत् ॥ २६ ॥
ज्ञानाद्यदि ज्ञेयकुलं न भिद्यते प्रजागरस्वप्नसुषुप्तयस्तदा ।
न संभवेयुः क्वचिदात्मनो दशा अर्थान्वयानन्वयतस्तदुद्भवाः ॥ २७ ॥
सार्थो हृषीकैर्मनसा सहायवानात्माऽश्नुतेऽर्थांस्तु बहिर्जगद्गतान् ।
स जागरः, स्वप्नदशात्वनिन्द्रियो मनःस्थमर्थं यदि भासयत्ययम् ॥ २८ ॥
अनिन्द्रियो यद्यमना बहिर्जगच्चान्तर्जगच्च प्रतिचेष्टते न चेत् ।
नास्ति द्वितीयं न ततोऽर्थभासनं सुषुप्तिरद्वैतदशा तदात्मनः ॥ २९ ॥
अर्था अहंज्ञानसमुद्भवा यदि त्वात्मप्रतिष्ठा न पृथक् स्युरात्मनः ।
अद्वैततोऽर्थानवभासनात्मिका सुषुप्तिरेषा न तदोपपद्यते ॥ ३० ॥

## ९—तदाक्षेपनिरासः ।

८ अत्रोच्यते मानसकोशवानयं ह्यात्मा स जीवः परमेश्वरोऽपि वा ।
इन्द्रो मनो व्योम बहिस्तथान्तरं तत्रार्थरूपोदय आत्मरश्मिभिः ॥ ३१ ॥
यथा बहिर्धा जगदाश्रयायाकाशो बहिर्धा किल भूमिकास्ति ।
अन्तस्तयान्तर्जगदाश्रयायाकाशो मनो नाम च भूमिकास्ति ॥ ३२ ॥
यथा रवे रश्मिकुलं पराहतं वायौ प्रकाशं जनयेदितस्ततः ।
तथा मनस्येव पराहतैरमी अर्था भवन्त्यात्मगभस्तिभिः स्वतः ॥ ३३ ॥
बहिर्मनस्यात्मगभस्तयो गताः प्रजागरार्थं जनयन्ति बाह्यतः ।
अन्तर्मनस्यात्मगभस्तयः स्थिताः स्वाप्नान्तिकार्थानुपपादयन्ति तान् ॥ ३४ ॥
यदा मनः केन च भूयसा मनोर्थकारिता हृत्तमसाभिभूयते ।
धूमावृतव्योमनि दीपकप्रभावदात्मनो ज्योतिरिहापवृज्यते ॥ ३५ ॥
अप्राप्य योगं मनसायमात्मा नार्थान् स उत्पादयते ततोऽयम् ।
वक्ताऽपि नो वक्ति न लोकते वा द्रष्टापि मन्तापि न मन्यते वा ॥ ३६ ॥
नन्वाहुरात्मा विभुरस्ति सर्वगो न तस्य योगो मनसा विहन्यते ।
अत्रोच्यतेऽर्कप्रतिबिम्बवद्भवेज्जीवात्मसंस्थावरणं च केनचित् ॥ ३७ ॥
मनोऽपि चाकाशमिदं तदात्मनः प्रोद्भूय चालम्ब्य तमेव तिष्ठति ।
न चात्मनोऽन्यत्र मनोऽस्ति भासते तत्रार्थवर्गः पुनरात्मनो भवेत् ॥ ३८ ॥
अहं मनोमण्डलमध्यवर्त्ती स चिद्घनो मण्डलगाश्रितोऽर्थाः ।
एवं त्रिवृद्रूपमहंपदार्थं मन्ये ध्रुवं तत् त्रयमेकवस्तु ॥ ३९ ॥

## ९—अथ ईश्वरबहिर्जगतोरैक्यम् ।

९ तथैव विज्ञानघनः स ओमिति प्रवर्तते मध्यगतस्तदाश्रितम् ।
अनन्तवैज्ञानिकनित्यमण्डलं तन्मण्डले ज्ञानविजृम्भणं जगत् ॥ ४० ॥

यदस्ति मज्ज्ञाननिमित्तमन्तर्गूढं तदैशं जगदीश्वरो वा ।
एकं महाज्ञानमिदं बहिर्धा जगत् तदेतन्न किमप्यपेक्षे ॥ ४१ ॥
तत्रापि रूपाणि भवन्तु नाना ज्ञानं तु रूपोपहितं न भिन्नम् ।
रूपाण्यसत्यानि विनाशवत्त्वान्नश्यत्तु नो नश्यति तद्धि सत्यम् ॥ ४२ ॥
ज्ञानं हि सत्यं जगतः स आत्मा दिग्देशकालैस्तु न मीयते सः ।
अस्यानवच्छिन्नतयाऽऽत्मनोऽर्थास्तादात्म्यभूता इह सन्त्यदृष्टाः ॥ ४३ ॥
यद्वात्र नाशप्रतिपत्तिकमतद्रूपनाशाः परिवर्तनानि ।
तद्रूपभेदा अपि निर्विशेषं तदैश्वरं ज्ञानमतस्तदेकम् ॥ ४४ ॥
ज्ञानं गिरिर्ज्ञानमिमे च वृक्षा ज्ञानं तदन्तर्विवराणि कक्षाः ।
ज्ञानं तदूर्ध्वं तदधस्तदग्रं यज्ज्ञायते ज्ञानमिदं समग्रम् ॥ ४५ ॥
यत्तु त्रिसत्या इह वेद्यवेत्रोः पृथक्त्वमाहुर्न तदस्ति साधु ।
बोधो हि बोद्धुः स च बोध्यवर्गो बोधस्य रूपान्तरमप्यनन्यत् ॥ ४६ ॥
यदिन्द्रियं जीवगतं तदीश्वरादुपात्तमासीदिति नेश्वरे तु तत् ।
कुतश्चिदायाति ततोऽत्र वित्तयो वेद्यानि वेत्ता त्रिवृदेक ईश्वरः ॥ ४७ ॥
ओमेव विज्ञान महाप्रकाशो विज्ञानमेवास्ति जगत् तदित्थम् ।
तादात्म्यमात्तं जगदस्ति भिन्नं न हीश्वरादीश्वर एव विश्वम् ॥ ४८ ॥
यतोऽमितत्त्वं तत एव चास्मिन्नानन्त्यमस्माच्च निराकृतित्वम् ।
एकत्त्वमस्मादविशेषताऽस्मात् सतोऽसतो वा न स भिद्यतेऽर्थः ॥ ४९ ॥

# १० अथ जीवेश्वरयोरैक्यम् ।

१० सत्यं यदों नाम विदन्ति नित्यं विज्ञानमानन्दमनन्तमेकम् ।
तद् ब्रह्मशब्देन वदन्ति तस्मादहं य आत्मैव स नास्ति भिन्नः ॥ ५० ॥
यदीश्वरः सर्वगतः स एकः सर्वप्रतिष्ठास्ति तदैष जीवः ।
तत्र प्रतिष्ठां लभतेऽथवाऽयं स्वे स्वे तु सर्वेश्वरवन्महिम्नि ॥ ५१ ॥
न स्वे महिम्न्येष पृथङ्महेशाद्व्याप्तप्रदेशानुपलम्भहेतोः ।
यदीश्वरे तर्हि जगद्वदेते जीवा अपि स्युर्जगदैतदात्म्यात् ॥ ५२ ॥
अनन्तविज्ञानघनः स ईशस्तस्यैव मात्राभिरिमे तु जीवाः ।
अहं परे चेति पृथक्कृतया स्युः समष्टितद्व्यष्टिकृतोऽत्र भेदः ॥ ५३ ॥
तदीश्वरज्ञानगताश्चिदंशा बुद्ध्या धृता ईश्वररूपसाम्यम् ।
आयान्ति तद्वद् विषयं भजन्ते ते स्युश्चिदाभासमया हि जीवाः ।
यथास्य सूर्य्यस्य विकाशमण्डलं ह्येकं तदादर्शविभेदतः पृथक् ।
विभिन्नपात्रेषु जलेषु भेदतो मायाचिदाभासविभिन्नता तथा ॥ ५५ ॥
सूर्य्याद्यथा सूर्य्यसमानरूपा बिम्बाः समन्तात् परियान्त्यनन्ताः ।
त एव काचे च जले च दृष्टाः पृथग्वदाभान्ति तथा वयं स्मः ॥ ५६ ॥
व्याप्नोति यावत्तु विकाशमण्डलं स तावदात्मा रविरेक इष्यते ।
प्राग्वारिधौ पश्चिमवारिधौ तथा भिन्नोऽपि बिम्बो न रवेर्विभिद्यते ॥ ५७ ॥

ज्ञानप्रकाशा इह यावदास्थितास्तावान् स एकः परमेश्वरः स्थितः ।
न वै चिदाभासतया पृथक् पृथग् दृष्टोऽप्युपाधीतर एक ईश्वरः ॥ ५८ ॥
अखण्ड एकः परमेश्वरः स्थितः साम्येन भात्येव समन्ततः सदा ।
कचित् कचित् किन्तु कदाचिदासते चिद्ग्राहिणस्ते न विभाति खण्डवत् ॥५६॥
तमो रजः सत्वगुणातिरेकात् तज्जन्ममृत्युव्यतिरेकतश्च ।
यज्जीवनानात्वमुशन्ति तन्न ज्ञानेऽहमर्थे हि तदर्थबाधात् ॥ ६० ॥
या त्वात्मनः सा प्रकृतिः पुरोक्ता यया प्रकृत्याऽहमयं धृतः स्याम् ।
सर्वे गुणास्तत्र वसन्ति जन्मादयोऽपि तस्या न चितः कदापि ॥ ६१ ॥
प्रत्यात्म सैषा प्रकृतिर्विभिन्नो प्रतिष्ठते किन्तु जगत्तदस्ति ।
अथो चिदाभासत आशु योऽसावहं स जन्मादिविकारशून्यः ॥ ६२ ॥
उपाधिभेदादिह भेदकॢप्तावपि स्वयं चिन्न विभेदिमेति ।
सर्वे चिदाभासगताश्चिदंशा एकश्चिदात्मा परमेश्वरोऽस्ति ॥ ६३ ॥

## ११—प्रतिबिम्बसमर्थनम् ।

११ अत्राहुरेके परमेश्वरस्य न संभवन्ति प्रतिबिम्बभूताः ।
जीवा यतो नास्ति जगत् न च स्वं स्वस्मिन् कदाचित् प्रतिबिम्बितं स्यात् ॥६४॥
सूर्यातिरिक्ते मुकुरे जले वा रश्मिः परावर्तित एव रूपम् ।
दधाति किन्त्वत्र परेशतोऽन्यन्नो वै परावर्तनहेतुरस्ति ॥ ६५ ॥
अत्रोच्यते नास्ति जगन्न तावद् यथात्र पश्यामि तथा तदस्ति ।
ज्ञानेतरत्वं जगतो निरस्तं ज्ञानादिना सिद्धमिदं न भिन्नम् ॥ ६६ ॥
यच्चाप्यसत्यत्वममुष्य मन्यामहे तदप्यस्य निजास्तितायाः ।
निराक्रिया ज्ञानगतां तु सत्तामालम्ब्य सर्वं जगदेतदस्ति ॥ ६७ ॥
सृष्ट्वा यथार्को व्यवहारपक्षे रश्मिं परावर्तयतेऽपि तस्मिन् ।
तथा परेशः परमार्थपक्षे सृष्ट्वेदमत्र प्रतिबिम्बितः स्यात् ॥ ६८ ॥

# १२--ईश्वरैकसत्यतास्थापनम् ।

१२ आनन्द एवेश्वररूपमग्र्यं ज्ञानं बलं द्वौ भवतस्तदंशौ ।
याः शक्तयस्ता हि पृथग्बलानि समुच्चयाच्छक्तिघनस्तु सत्ता ॥ ६९ ॥
ज्ञानानि जीवाः प्रभवन्ति सर्वे बलानि सर्वाणि जगन्ति सन्ति ।
कथं नु तानीश्वरतः पृथक् स्युर्ब्रह्मैव सर्वं नु जगत् सजीवम् ॥ ७० ॥
ग्राह्य ग्रहीत्रित्थमिदं द्विधास्ति स्वभावतो ब्रह्म ततो द्विधेदम् ।
प्रदृश्यते जीवजगद्विभेदान्न वस्तुतो जीवजगद्विभेदः ॥ ७१ ॥
जीवो जगच्चेत्युभयं तदेकप्रभूतमस्तीत्यत एव मन्ये ।
सर्वं जगत् प्रत्ययनिष्ठमेकं तादात्म्यमापन्नमिदं विभाति ॥ ७२ ॥
न तर्कतः किन्तु स ईश्वरो मे प्रतीकतोऽन्वक्षमिवोपलब्धः ।
सत्तां परिज्ञानमथो सुखं वा नाद्धातमां पश्यति को जनेषु ॥ ७३ ॥

या निर्विशेषा परमेह सत्ता निःशेषविज्ञानसमुच्चयो यः ।
परास्ति या सर्वसुखस्थकाष्ठा सत्ता चिदानन्दघनः स ईशः ॥ ७४ ॥
गोत्वं पशुत्वं च सचेतनत्वं द्रव्यत्वमर्थत्वमिति क्रमेण ।
संपद्यते यः परमोऽत्र भावः स ईश्वरः सा परमात्र सत्ता ॥ ७५ ॥
यास्तूललोष्टाश्मकशैलवज्रादिशक्तयोऽत्रोत्तरशक्तिनिघ्नाः ।
तासां पराशक्तिरशेषशक्तिः स ईश्वरः सा परमात्र सत्ता ॥ ७६ ॥
एकस्य मज्ज्ञानमतः परस्याधिकं तथान्यस्य ततोऽधिकं च ।
यतोऽधिकं नास्ति भवेद्ध्रुवं सा मात्रा पराऽसौ परमेश्वरोस्ति ॥ ७७ ॥
एकस्य मोदादधिकः परस्य ततः परस्यापि ततः परस्य ।
यतोऽधिको नास्ति ततो भवेद्ध्रुवं सा मात्रा परासौ परमेश्वरोस्ति ॥ ७८ ॥
मात्रा मिता यावदिहानुभूयते तावत्ततोऽन्यामपि धीरपेक्षते ।
स्वविश्रमाय ध्रुवमभ्युपैति धीर्मात्रामनन्तामममितां स ईश्वरः ॥ ७९ ॥
* आनन्दमोमक्षरमस्ति सत्यं नित्यं हि विज्ञानमनन्तमेकम् ।
वयं चिदाभासमयास्तदंशा जगत्त तत्कर्म्मचितो विवर्तः ॥ ८० ॥
ब्रह्माऽद्वितीयं तत एकमेवेत्य चक्ष्महे विश्वमिदं समस्तम् ।
ब्रह्मैकमेवं वयमप्यनन्ता ब्रह्मैव नातः परमत्र विघ्नः ॥ ८१ ॥

## १३.—ऐक्यसमन्वयः ।

१३ जीवात्मनाऽन्तर्जगदस्त्यभिन्नं परमात्मनैवं च बहिर्जगत्तत् ।
जीवात्मनां यत् परमात्मनैक्यं मन्यामहे तेन तदेकसत्यम् ॥ ८२ ॥
वाक् प्राणतः प्राणकला मनस्तः प्रादुर्भवत्येवमिमा अवस्थाः ।
एकस्य तासामिदमेतदात्म्यं मन्यामहे तेन तदेकसत्यम् ॥ ८३ ॥
अस्तीति (१) बोधो,ऽपि च सोऽस्ति, (२) बोधो रसः, (३) स बोधोऽपि च (४) बोद्धृ बोध्ये ।
रसोस्ति, (५) सत्तापि (६) रसो, न चान्यन्मन्यामहे, तेन तदेकसत्यम् ॥ ८४ ॥

---

* ( ओम् = अक्षरम् )

| | | | |
|---|---|---|---|
| 'अस्ति'–इति बोधरूपम् = अस्तीत्येवं ज्ञायते | ज्ञानेनानुगृह्यते सत्ता | ज्ञानेनाप्यविनाभूता सत्ता | १ |
| बोधःअस्ति = तदिदं ज्ञानं सत्तावत् | सत्तयाऽनुगृह्यते ज्ञानम् | सत्तयाप्यविनाभूतं ज्ञानम् | २ |
| 'रसः' इति बोधरूपम् = रस इतिकृत्वा ज्ञायते | ज्ञानेनानुगृह्यते रसः | ज्ञानेनाप्यविनाभूतो रसः | ३ |
| बोधो बोद्धा बोध्य इति रसाः = तदिदं ज्ञानं रसः | रसेनानुगृह्यतेज्ञानम् | रसेनाप्यविनाभूतं ज्ञानम् | ४ |
| रसः अस्ति = बलाधारः कश्चिदस्ति | सत्तयाऽनुगृह्यते रसः | सत्तयाप्यविनाभूतो रसः | ५ |
| सत्ता रसः = ज्ञानक्रियालम्बनत्वात् | रसेनानुगृह्यते सत्ता | रसेनाप्यविनाभूता सत्ता | ६ |

१४ ये ये त्रिसत्यैस्त्रिविधा इहोकाः सर्वे विशेषास्त इमे भवन्ति ।
सामान्यतस्ते ध्रुवमुद्भृताः स्युः स निर्विशेषः परमो न आत्मा ॥ ८५ ॥
सर्वे विशेषा असदेव रूपं तत्राविशेषस्य सदेव रूपम् ।
असन्मयं सद्ध्यखिलं प्रतीमस्तस्मात् समस्तं सदसद् वदामः ॥ ८६ ॥

# १४ उपासना ।

१५ यदीश्वरे स्वात्मसमर्पणं धिया विधाय स्वातन्त्र्यधियं विमुञ्चति ।
सोपासना तत्र च पीठिकात्रयी क्षुद्रैस्तु सेवा क्रियते प्रभोरिव ॥ ८७ ॥
भावक्रिया द्रव्यगतं निरस्यते द्वैतं त्रिधाऽद्वैतमिदं विधीयते ।
स्वप्नत्रयं तत्क्रमतो विधूयते मध्यैः कृता मध्यमपीठिका हि सा ॥ ८८ ॥

"विकल्पिता वस्तुतया विलोकयत्यैक्यं यदा कारणकार्य्यवस्तुनः ।
यदीश्वरे मृद्घटयोरिवात्मनोऽप्यैक्यं तदद्वैतमुपैति भावतः ॥ ८९ ॥
ददाति भुङ्क्ते स्वपिति प्रबुध्यते यद्यन्मनो वाकृतनुभिः करोत्ययम् ।
नाहं करोमीति यदीश्वरेऽखिलं पश्येत् क्रियाद्वैतमिदं स पश्यति ॥ ९० ॥
सर्वात्मकेशैक्यधिया यथात्मनस्तथेतरेषामपि सर्वदेहिनाम् ।
स्वार्थांश्च कामांश्च समानमीप्सति द्रव्याश्रिताद्वैतमिदं स पश्यति" ॥ ९१ ॥
(भागवते ७ । १५)

यां भूतशुद्धिप्रतिपन्नया दिशा विलोप्य भूतप्रतिपत्तिमीश्वरे ।
विलापयत्यात्मसमस्तविग्रहं स ईश्वरीभावमुपैति योगतः ॥ ९२ ॥

"विज्ञानमेतद्धनुरस्त्युपासना शरोऽथ लक्ष्यं तु तदक्षरं परम् ।
आयम्य तद्भावगतेन चेतसा संधाय विध्येत् स हि तन्मयो भवेत् ॥ ९३ ॥
आत्मा शरो वा प्रणवो धनुः कृतस्तदक्षरं लक्ष्यमुदीर्य शिक्षितः ।
यद्यप्रमत्तः कुशलं प्रबोधयेत् शरो यथैवं स हि तन्मयो भवेत्" ॥ ९४ ॥ (मुण्डके २ । २)

"अक्षाणि चित्ते तदु वाचि मातृकाक्रमे तु तां तं प्रणवस्वरेऽथ तम् ।
बिन्दौ च नादे तमिमं लिनात्यपि प्राणं महत्यात्मनि तं तमीश्वरे" ॥ ९५ ॥
(भाग ७ । १५)

एषोत्तमा त्वात्मसमर्पणक्रिया सोपासना विज्ञतमाधिकारिणाम् ।
यत्र त्विदं द्वैतमशेषतो न चेद्विलुप्यते भक्तिरियं न सोत्तमा ॥ ९६ ॥
देवर्षिरित्थं निजगाद नारदो भक्ताग्रणीस्तत्प्रतिपन्नया दिशा ।
उपासको भक्तिवशान्महेश्वरे सायुज्यमाप्नोत्यभयं च विन्दति ॥ ९७ ॥
या भेदधीः सा ध्रुवमस्त्यसत्या तामास्थितः श्रेयसि नैति योगम् ।
सत्यं त्वभेदं प्रतिपद्य जीवः स्यादीश्वरः शान्तिघनः प्रसन्नः ॥ ९८ ॥
अणोरणीयान् महतो महानयं विश्वेश्वरो विश्वमिदं विधारयन् ।
ज्ञानात्मकः संशयमुच्छिनत्ति यः स्वान्तेऽर्प्यतेऽस्मिन्नयमास्पदे धियः ॥ ५ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ६ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे
ईश्वरैकसत्योपनिषत् संपूर्णा ॥



# १५–उपसंहारः ।

वेदग्रन्थविमन्थनप्रतिफलप्रज्ञावदातश्रमः
श्रीमान्यो मधुसूदनः समभवद् वेदार्थबोधक्षमः ॥
वेदार्थप्रतिपत्तिशून्यमनसां विज्ञानशिक्षाक्रम—
श्रद्धार्थं कृत एव संशयसमुद्धारोऽमुनाऽत्युत्तमः ॥ १ ॥
कालाक्षिगोभूमिति वैक्रमाब्दे [ १९२३ ] जातोऽष्टमेऽब्दे गुरुणोपनीतः ।
स पञ्चविंशे कृतविद्य एतं पञ्चाशदब्दो व्यदधान्निबन्धम् ॥ २ ॥
यज्ञेतिहासस्तुतिभिः स वेदान् विज्ञानतश्च प्रविभज्य तेषु ।
विज्ञानभेदान् दश देवलोके पुरा प्रसिद्धान् यततेऽभिनेतुम् ॥ ३ ॥
निर्म्माति भागैर्दशभिः स विद्यावाचस्पतिः श्री मधुसूदनोऽयम् ।
यं ब्रह्मविज्ञाननिबन्धमस्मिन् पूर्णोऽभवत् संशयभङ्गभागः ॥ ४ ॥

इति श्रीमधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्म-
विज्ञानशास्त्रे संशयतदुच्छेदवादः
संपूर्णः ॥ ११ ॥ * ॥



## मूलोपनिषदि ।

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| १ | ३ | काण्ड | काण्डः |
| १ | १७ | त्यैत्त्रयं | त्यैतत्त्रयं |
| २ | ७ | द्रष्ट | द्रष्टृ |
| २ | ७ | निभाति | विभाति |
| २ | ११ | स विकार | सविकार |
| २ | १५ | द्रष्ट | द्रष्ट |
| २ | २१ | चान्ये न | चान्येन |

## कृष्ण त्रिसत्योपनिषदि ।

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ३ | ४ | तु | तु |
| | ५ | परंत्रयं | परं त्रयं |
| | १८ | विरूद्ध | विरुद्ध |
| ४ | १ | स त्तापि | सत्ताऽपि |
| | १० | म।दये | मोक्षे |
| | ११ | तद्वेत्यथ वेत्य | तद्वेत्यथ वेत्य |
| | २३ | विभातिविज्ञा | विभाति विज्ञा |
| | २६ | कियान्वा | कियान् वा |
| ५ | २ | भाति सिद्धा | भातिसिद्धा |
| | २ | स्ति सिद्धा | स्तिसिद्धा |
| | १० | ज्ञायमानाहि | ज्ञायमाना हि |
| | १२ | तृथक् | पृथक् |
| | १४ | स्ततासंविदि | स्तिता संविदि |
| | १६ | पाप्मा प्रसङ्ग | पाप्माऽप्रसङ्ग |
| | २४ | तोष्पतेवा | तोष्पते वा |
| ६ | २३ | भाति भिन्ना | भातिभिन्ना |
| ७ | ४ | सन्तन्य | सन्नन्य |
| ८ | १ | स विकल्प | सविकल्प |
| | १ | यदृथ | यदर्थः |
| | २ | आकारिन | अकारितं |
| | २५ | मर्थ | मर्थं |
| | २५ | वृत्तिभागः | वृत्तिभागुः |
| | ३५ | प्रवृद्धाम् | प्रवृद्धाम् |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| १० | २५ | ज्ञानोद्याः | ज्ञानोद्यः |
| ११ | ३१ | पृथक | पृथक् |
| | ३३ | पृथक | पृथक् |
| १२ | १२ | त्सुककस्य | त्सुकस्य |
| | १५ | याति | प्रयाति |
| १३ | २३ | शोका | शोको |
| | ३० | तेतत् | ते तत् |
| १४ | १६ | क्वचिच्चत् | क्वचिच्चेत् |
| | १६ | रमेत् | रमेत |
| १५ | १० | मृत्युमृत्यु | मृत्युर्मृत्यु |
| | १२ | परिपूति | परिपूर्त्ति |
| | २६ | मुत्पद्यत | मुत्पद्यत |
| | ३२ | द्ध्यात्म | द्ध्यात्म |
| | ३४ | हन्ति | हन्ति |
| १६ | ४ | श्चिवि | श्चिद् वि |
| | १४ | कामोऽस्ति | कामेऽस्ति |
| | १६ | भयं न | भयं नु |
| | ३२ | प्रवर्तते | प्रवर्तते |
| १७ | ११ | न्नपालये | न्नपालये |
| | १२ | त्यसा | त्यसौ |
| | २३ | वर्ष्मणाः | वर्ष्मणः |
| १८ | २२ | मात्रा कृम | मात्राकृत |
| | २२ | थवाक्वचित् | थवा क्वचित् |
| २० | १८ | तद् घटि | तद्घटि |
| | २१ | क्वचित् | क्वचित् |
| २१ | १ | सामथ्यम् | सामर्थ्यम् |
| | ८ | प्रतिपूर्ति | प्रतिमूर्त्ति |

## पूर्णर्द्धिसत्योपनिषदि ।

| | | | |
|---|---|---|---|
| २२ | १५ | घनो परिस्तर: | घनोपरि, स्तरः |
| | १७ | वत्स्यति | वर्त्स्यति |
| | १८ | वत्स्य ती | वर्त्स्यती |
| | २८ | ह्यदो | ह्यदो |
| २३ | ५ | पूणं | पूर्णं |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| | ३२ | तताऽन्य | ततोऽन्य |
| २४ | ८ | ग्रहणो | ग्रहणे |
| २५ | १२ | विनश्य | विम्रश्येति वा पाठः |
| | ३० | दुष्टोऽपि | दृष्टोऽपि |
| २६ | १२ | स्थथा | स्तथा |
| २८ | १७ | कर्म्मणे | कर्म्मणो |
| | २२ | भेदस्तु | भेदास्तु |
| २९ | ८ | इात | इति |
| ३१ | १ | तत्रह | तत्रेह |
| | १ | स्वभोज्यै | स्वभोग्यै |
| | २५ | पोऽस्ति | पोऽस्ति |
| ३२ | १ | लाह | लोह |
| | ३ | भाति | भान्ति |
| | १२ | कृष्णोऽतिसूक्ष्मावरणो | कृष्णोऽतिसूक्ष्मावरणे |
| | २१ | रयन्तु | रयं नु |
| | २९ | वृत्ता | वृत्तौ |
| ३३ | ११ | रूपामि | रूपमि |
| | १२ | तयार्न मात्रा नि | तयोर्न मात्रा नि |
| | २१ | बलस्तु | बलात्तु |
| ३४ | १८ | सद्दढा | सुदृढा |
| ३५ | १३ | चूणतु | चूर्णं तु |
| | १७ | स्त्रयाः | स्त्रयः |
| | १८ | ऋचा | ऋचां |
| | २१ | अग्नीश्च तानाहुरुदूढवृत्या सह-येचाग्नयःसाकमुदूढवृत्त्या तानि | |
| ३६ | ११ | प्राणा | प्राण |
| | १३ | विद्यद्रे | विद्युद्रे |
| | २४ | धीयते | धीयन्ते |
| | २५ | भित्राणि | मित्राणि |
| ३७ | १७ | न्यधार | न्यधरा |
| | १८ | इत्थं तु | इत्थं नु |
| | २१ | संहिता | संहितां |
| ३८ | ३२ | चतुष्या | चतुष्पा |
| ३९ | ६ | वृहती | वृहतो |
| | १५ | म्रदणं | म्रदणां |
| ४१ | ६ | संसर्गः | संसर्गाः |

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ४१ | १३ | आसङ्गाः | आसङ्गः |
| | १६ | असंसर्गः | असंसर्गाः |
| | १६ | ब्रह्माण | ब्रह्मणि |
| ४२ | १५ | उद्वद्ध | उद्बद्ध |
| | १५ | मस्ति् | मस्ति |
| | २६ | यत्रत | यत्रैत |
| ४३ | २६ | रसःऽक्षरो | रसोऽक्षरो |
| ४४ | ५ | अथाक्षरे | अथ क्षरे |
| ४६ | २७ | माया | मायाः |
| ४७ | २६ | वन्धश्च | बन्धश्च |
| ४८ | १२ | प्पमावो | प्यभावो |
| | २१ | युङ्क्े | युङ्क्ते |
| ४९ | ६ | मायामि | मालामि |
| | २० | ब्रह्मति | ५ ब्रह्मेति |
| | २१ | ५ उन्मी | उन्मी |

## प्रत्ययैकसत्योपनिषदि ।

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ५१ | २४ | प्रोतक्यं | प्रोत्तक्यं |
| | २८ | मथश्वरश्च | मथेश्वरं च |
| ५३ | ११ | मृत्यो | मृत्यौ |
| | १२ | मृत्ययो | मृत्यवो |
| | १३ | यथोन्नयः | यथोर्म्मयः |
| | १४ | ऽमृत | ऽमृतं |
| ५४ | २६ | अहं हि सत्यं | भानं हि सत्यं |

## पुरुषैकसत्योपनिषदि ।

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ५६ | ५ | त्रिधा या | त्रिधा वा |
| ५७ | ३१ | छन्न | छन्नं |
| | ३१ | तदैकः | तदेकः |
| ५८ | २१ | तथा भावयते | यथा भावयते |
| | २५ | सोऽथो | सोऽर्थो |
| | ३१ | मनतं | मनृतं |
| ५९ | ६ | चोपयश्रते | चोपश्रयते |

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ६० | १७ | प्रभदोत् | प्रभेदात् |
| | २१ | ताणुसृष्टिः | ताण्डसृष्टिः |
| | २२ | क्षुद्रात्तु | क्षुद्रा तु |
| ६१ | २१ | यथा व | यथा वा |
| | २१ | श्वरोऽपि | श्वरेऽपि |
| | २२ | कठ श्रतिः | कठश्रुतिः |
| ६२ | ७६ | श्लोकादग्रे—अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्चयत् इत्यधिकः पठनीयः । | |
| ६३ | ११ | ब्रह्मा कर्म्म च कर्म्माणि | ब्रह्मा कर्म्म च कर्म्मणि |
| ६४ | १ | तापस्प | तापसस्य |
| | २ | सुपर्णः समुद्र | सुपर्णः स समुद्र |
| | ५ | दिलस | दिल से |
| ६५ | ३—४ तृतीय चतुर्थ पङ्क्त्योर्म्मध्ये त्रुटिः-अर्थक्रिया यज्ञः ( शीर्षकम् ) | | |
| | २१ | दात्मन्वि नो | दात्मन्विनो |
| ६६ | १ | विस्रस | विस्रंस |
| | ७ | दोष्ण्यं | दौष्ण्यं |
| | १५ | कान्नो पादा | कान्नोपादा |
| ६७ | ८ | भूताप | भूतोप |
| | १७ | ग्रसित | ग्रसति |
| | २० | प्राणे | प्राणो |
| | २५ | पराश्चकश्चित् | परांश्च कांश्चित् |
| ६८ | ५ | न्दिु प्रयान् गवाश्चा | न्दुप्रायान् गवाश्वा |
| | १५ | संभाविता | संभाविताः |
| | १५ | इङ्गा | इङ्गाः |

## संशयाधिकारे संदिग्धसर्वोपनिषदि ।

| | | | |
|---|---|---|---|
| ७० | ८ | वाचं | वाच्यं |
| ७१ | ५ | कउ वृक्ष | कउ स वृक्ष |
| | ६ | तदध्यति | तद् यदध्यति |
| | ८ | जो दुनियां | जो दुनियां पर कब्जा कर खड़ासा है |
| | १० | अर्वाग्र | अर्वाग् |
| | १७ | दीर्घतया | दीर्घतमा |
| | १८ | मात्मान | मात्मन |
| | १९ | मस्य | मस्थ |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| | १६ | नस्पा | नस्था |
| | २८ | रूप | रूपे |
| | ३५ | द्रष्ट व | द्रष्टैव |
| ७२ | २ | क | क्व |
| | २६ | दशा | दशा |
| ७३ | २ | मतेद् | मेतद् |
| | १५ | एते........प्रतीया | एतै........प्रतीता |
| | १६ | तदिन्द्रय | तदिन्द्रिय |
| ७६ | १४ | वैकल्प | वैकल्य |
| ७७ | १५ | बह्यो | बह्वयो |
| | १६ | मर्थकथावितण्डा | मर्थ कथा वितण्डा |
| ७८ | १६ | वृक्षनिधा | वृक्षविधा |
| | १६ | लामानि | लोमानि |
| ८० | १५ | सहव | सहैव |
| | २१ | निश्चतो | निश्चितो |
| ८२ | ११ | शक्तिप्रबुद्धा | शक्ति प्रबुद्धां |
| | १२ | शक्तिप्रबुद्धा | शक्ति प्रबुद्धा |
| | १४ | युक्तये | भुक्तये |
| ८२ | २३ | तान्येवनु | तान्यैवानु |

## विशिष्टत्रिसत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ८३ | २४ | श्वरौ | श्वरो |
| ८४ | २ | यथाश्रते | यथाऽश्रुते |
| | २६ | त्रि | त्रु |
| ८६ | २ | ताण्ड्य | ताण्ड्य |
| | ६ | वेष्ट | वेष्ट्य |
| | १५ | भ्याः | भ्यः |
| | २४ | पान्श्रु | पाश्रु |
| ८७ | ५ | पशस्कारी पशसा | पेशस्कारी पेशसो |
| | २१ | नागा | नाना |
| ८८ | ३३ | लब्धः | लब्धा |
| | ३४ | नरेणवरेण | नरेणावरेण |
| ८६ | ६ | परीक्षमाणः | परीक्षमाणाः |
| ६२ | २६ | सूर्य्योऽभिजिद्धानुदिश | सूर्य्योभिजिद्धानुदिश |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ९३ | २१ | सभर्गा | सगर्भा |
| | २२ | स्ता | स्ताः |
| | ३० | तांस्त | तांस्ते |
| | ३३ | आनन्दा | अनन्दा |
| ९४ | ३० | रण्यगा | अरण्यगा |
| | ३१ | व्रह्य | व्रह्म |
| ९५ | १५ | पृथिव्या | पृथिव्यां |
| ९६ | ११ | धाम् | धाम |
| | २६ | च्छूले | च्छूले |
| | ३१ | रथन्तरे | राथन्तरे |
| ९८ | ३ | स्रेष्टुभ | स्त्रैष्टुभ |
| | ३ | या | यो |
| ९९ | १८ | ाकश्चे | नाकश्चे |
| १०१ | ६ | भास्यमान | भास्यमानं |
| | ११ | ज्ञान | ज्ञानं |
| १०४ | १४ | मन्वेयि | मन्वेति |
| | १८ | वीचिश्च | वीचीश्च |
| | २३ | प्रस्रवती | प्रस्खलती |
| | २४ | सेऽत्यभा | सेऽप्यभा |
| १०५ | ३ | दोषान् | दोषात् |
| | ४ | दोषतऽस्त्य | दोषतोऽस्त्य |
| | १७ | क्षिपित्ते | ऽक्षि पित्ते |
| १०७ | १५ | तता | तदा |
| ११० | ३२ | प्रतिपतं | प्रतिपत्तुं |
| १११ | १ | श्रत्या | श्रुत्या |
| ११२ | ६ | दिवाप्राणः | दिव्यप्राणः |
| | १६ | सुषुम्णेव | सुषुम्णयैव |
| ११४ | ६ | सिद्धान्ये | सिद्धान्यै |
| | ८ | पश्यान्त | पश्यान्ति |
| | १४ | जगत्त | जगत्तु |
| | २६ | ज्ञान | ज्ञानं |
| ११५ | ६ | बिम्बितः | बिम्बिताः |
| | २६ | वहिगर्जत् | वहिर्जगत् |
| ११७ | ३१ | ध्रवं | ध्रुवं |
| ११८ | ११ | ध्रव | ध्रुव |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| १२० | ८ | सृष्ठा | सृष्ट्या |
| | ११ | रत | स्त |
| | २२ | ग्रहा | ग्रहाः |
| | ३१ | धत्त | धत्ते |
| १२१ | २४ | ङ्कुरे | ङ्कुरो |
| १२३ | २३ | स्वन्तत्र | स्वतन्त्र |
| १२४ | ७ | हडिदश्व | हरिदश्व |
| १२५ | २२ | क्रू तः | क्रू तं |
| १२६ | ३ | शाश्वत्वात् | शाश्वतत्वात् |
| १२८ | २ | वर्णे | वर्णो |
| १३० | २० | भेदात्त | भेदात्तु |
| १३१ | २७ | स्थलं | स्थूलं |
| १३२ | १३ | भविष्यत् | भविष्यद् |
| १३४ | १५ | योगा | योग |
| १३८ | १६ | सत्वं | सत्तं |
| १३९ | १६ | स्तया | स्तया |
| | २५ | नत्वाहु | स्त्वाहु |
| | २८ | भवेत् | भवन् |
| १४० | ७ | कमतद्रूप | कर्म्मतद्रूप |
| | ३४ | व्याप्नाति | व्याप्नोति |
| १४१ | ४ | ते न | तेन |
| | ११ | विभेदि | विभेद |
| | १६ | ज्ञानादिना | ज्ञानाद्विन |
| | २३ | सृष्टवेद | सृष्ट्वेद |
| १४२ | ८ | ध्रवं | ध्रुवं |
| | १८ | परमात्म | परात्म |
| | २१ | मेत | मैत |
| १४३ | २६ | शान्तघनः | शान्तिघनः |
| १४४ | ६ | मिति | मित |

